श्रीः

# ।। अथ श्रीस्वाप्न वृन्दावनाख्यानं प्रारभ्यते ।।



सम्पादक : श्री. एच. सुब्बराव्; एम् ए

प्रकाशक : पर्याय श्री. सोदे वादिराज मठ, उडुपि.

1980

# शुद्धाशुद्धपत्रिका ॥

| पृष्ठ | अध्याय-श्लोक | अशुद्ध | शुद्ध |
|---|---|---|---|
| 3 | 1-36 | विभति | विभाति |
| 4 | 1-58 | मृतिना | मूर्तिना |
| 4 | 1-72 | वेभव | वैभव |
| 7 | 2-2 | वव | वध |
| 7 | 2-19 | भरी | भेरी |
| 9 | 2-57 | सुरेन्द्र | न्द्रै |
| 13 | 3-54 | नन्दना | |
| 14 | 3-68 | सञ्जा | सञ्जी |
| 15 | 3-88 | नैव | नवै (नृ) |
| 25 | 5-61 | कार्तं | गात्र |
| 26 | 5-71 | दानासु | द नात्सु |
| 26 | 5-75 | स्नध | सड्घ |
| 26 | 5-79 | दुर्बुधि | द्धि |
| 34 | 7-14 | वक्रु | वक्तु |
| 53 | 10-36 | विष्णु | विष्णु |
| 54 | 10-52 | थपान् | यूथपान् |
| 56 | 10-80 | पञ्चत्व | पञ्चत्व |
| 60 | 10-162 | शाठ्च | शाठ्यं |
| 64 | 11-36 | जीविन | जीवित |
| 65 | 11-57 | मित्रौ | मित्रो |
| 66 | 11-69 | पुष्पोलसत् | पुष्पोल्लसत् |
| 67 | 11-95 | शद्व | शब्द |
| 68 | 12-3 | मण | भण |
| 68 | 12-4 | मण | भण |
| 72 | 12 80$\frac{1}{2}$ | बुद्धा | बुद्ध्या |
| 73 | 12-91 | पूत्र | पुत्र |
| 76 | 13-27 | मुञ्चन्ते | मुच्यन्ते |
| 76 | 13-38 | भषण | भूषण |
| 78 | 13-63 | वै वै | वै |
| 80 | 13-89 | वाणिजो | वणिजो |
| 82 | 14-27 | च्छ्ये | च्छ्रेय |
| 83 | 14-51 | चैदार्यते | चैदीर्यते |
| 85 | 14-88 | त्व | त्व |
| 87 | 15-2 | भर्वत श्रद्धा | भक्ति र्भव श्रद्धा |
| 88 | 15-35 | स्वस्थ | स्वस्य |
| 91 | 15-77 | स्वाःथा | स्वस्था |
| 92 | 15-102 | वान्चित्त | वाञ्छित |
| 97 | 16-57 | छिनाया | छिनत्या |

| पृष्ठ | अध्याय-श्लोक | अशुद्ध | शुद्ध |
|---|---|---|---|
| 97 | 16-65 | वक्षरे | वक्ष्ये |
| 98 | 16-78 | वशम' | वशग: |
| 99 | 16-107 | भविष्याज्ञा | भविष्यज्ञा |
| 100 | 17-10 | कल्चाण | कल्याण |
| 101 | 17-27 | त्व | त्व |
| 102 | 17-45 | ग्रजन | ग्रजेन |
| 105 | 17-102 | एव | एव |
| 109 | 18-50 | त्व | त्व |
| 112 | 18-96 | कामति | का:मति |
| 115 | $19\text{-}50\frac{1}{2}$ | णार्तिसम | णार्तिम्म |

| पृष्ठ | अध्याय-श्लोक | अशुद्ध | शुद्ध |
|---|---|---|---|
| 116 | 19-69 | दैवदैव | .. दैवं |
| 119 | 20-6 | श्रेष्ट | श्रेष्ठ |
| 120 | 20-21 | स्पष्ठ | स्पष्ठं |
| 122 | 20-56 | कभ्यत | कभ्यते |
| 122 | 20-58 | एच्छते | गच्छते |
| 125 | 21-7 | पश्यध्वा | पश्यध्व |
| 127 | 21-40 | पूजकस्य' | पूजकस्य |
| 128 | 21·61 | मरितम् | मयेरितम् |
| 134 | 20-40 | त्व | त्व |

# पुरोवादाशंसनम्

व्यासाय भवनाशाय श्रीशाय गुणराशये ।
हृद्याय शुद्धविद्याय मध्वायच नमो नमः ॥
तपोविद्याविरक्त्यादि सद्गुणौघाकरानहं ।
वादिराजगुरून् वन्दे हयग्रीवदयाश्रयान् ॥

श्रीवादिराजतीर्थ गुरुसार्वभौमा

पर्याय मठाधीश श्रीविश्वोत्तमतीर्थ श्रीचरणा.

विज्ञातचरमेव प्रज्ञावतां स्वाप्नवृन्दावनाख्यानं नाम निबन्धो भवबन्धान्मुमुक्षुभि: अतितरामुपादेय इति । य खलु श्रुतिवत् प्रसिद्ध कर्तृरहित श्रूयमाण एव मह्यां महीयते । यन्मुखान्नि:सृतोऽयं ग्रन्थराशि· स केवलं स्वय वक्तैवास्मि न कर्ताऽस्मीति किल विदाम्बभूव । इदमाख्यानमापाततोऽप्रसिद्ध कर्तृकत्वेन भासमानमपि अनाप्तकर्तृकं वा विप्रलम्भककर्तृकं वा इति शङ्कैव नोदियात् ।

यतः एनदाख्यानं स्वयमेव व्यरीचमिति स्फुटं अस्मिन्नेव वृन्दावनाख्याने श्रीवादिराजार्या स्वयं आचक्षते । अथ स्व माहिमानं स्वाम्परोक्षत आवेदयितु श्रीवादिराजगुरुसार्वभौमा एव स्वयं इमां कृति निबध्य विप्रवरमुखान्निस्सारयाम्बभूवु. इति गन्यामहे । अत्र च तदीय कृत्यन्तरनिष्ठाविशिष्टता च नितरां सहकरोति । सत्येवं श्रीवादिराजगुरूणा ऋजुना अस्य ग्रन्थस्य तत्कृतिता च दुर्दैवात् अनाकलितवता अत्यर्थ अनर्थसार्थमत्र ग्रन्थं स्वय प्रबोधयाम्बभूवु । एषा ऋजुत्वे भाविसमीरत्वे च निश्चप्रचं प्रमाणभूतस्यास्य आख्यानस्य मुद्राप्यप्रकटन. एषा ऋजुत्वे नितराश्रद्धालव जमखण्डि-वादिराजाचार्याः स्वावसानकाले स्वतच्छात् ( श्रीनिवास आचार्यान् ) अत्यर्थमशासु । तदनुरोधेन 1925 तमे वत्सरे मुद्रापिते स्वाप्नवृन्दावनाख्यानग्रन्थे न प्रकरणभेदोनिरदेशि । अशुद्धिबाहुल्य च परिदृश्यते । अतो यथावास्थितार्थानवगमात् अनर्थप.शङ्कच प्रकरणभेदेन विशद अर्थबोधक अशुद्धिदोषरहितं मुद्रणदोषरहितं च पुस्तकान्तर अनेकैरपेक्षितमिति हेतो नवमेतत्प्रकटन अस्मत्पर्यायोत्सववेलान्तराले सङ्कल्पितमभवत् । तत्कार्यं अस्मदभिजनाः सुगृहीतनामधेयाः एच् सुब्बराव्, एम् ए महाशयाः स्वचरमे वयस्यपि गुरुदेवतादि भक्तिपारवश्येन महायासमप्यविगणय्य सोत्साहमिदानी असीसधन् इति परंप्रमोदामहे । अमीषामपि श्री वादिराजगुरावनितरसाधारणो निर्व्याजो भक्तत्यतिशय. एतैरित. पूर्वं कर्णाटकभाषया विरच्य प्रकटिते वादिराजऋजुत्वसिद्धान्ताख्ये महाप्रबन्धे व्यक्ती-भवति । तद्ग्रन्थे गुरूणां ऋजुत्वे तत्र भाविसमीरत्वे च प्रमाणानि सदागमावगतबलवदन्तरङ्गोदाहरणैः सम समदर्शिषत । एव स्वय कृतत्व प्रकटितै. भाषाद्वये संस्कृतमयैरेव अनेकै ग्रन्थैः परिशीलितैः सात्विक जना नून हरिगुरुप्रसादेन चतुर्विधान् पुरुषार्थान् विन्देयुरिति आशास्महे । अस्य महाग्रन्थस्य मुद्रणादिव्ययधन समग्रं श्रीगुरुवरप्रेरणया स्वय प्रदाय अस्मान्परितोषितवद्भ्य श्रीयुतेभ्य आर् दि. राव्, बि. ए. हिन्दूस्थान टाइम्स् करेस्पोन्डण्ट् नागपूर, इति आख्यायमानेभ्यः इतोप्यधिक ज्ञानभक्तिवैराग्याणि प्रदाय परमानुग्रहपूर्वक सपरिवारान् इमान् समुद्धरतु भगवानिति अस्मदाराध्य श्री भूवराह वेदव्यासलक्ष्मीहयग्रीवात्मक अनन्तरूप श्रीगोपालकृष्ण सम्प्रार्थ्य फलमन्त्राक्षतै सह प्रसादयामः । एवं अस्य ग्रन्थस्य प्रकाशनाय सहकुर्वता सर्वेषा सात्त्विकजनाना अभिमतार्थसिद्धिपूर्वकं हरिगुरवः परम प्रसादं कुर्युरिति च आशास्महे ॥

श्रीविश्वोत्तमतीर्थरू

पर्याय श्रीसोदेवादिराज मठ,

उडुपी

रजतपीठपुरम्

5-7-1980

॥ श्री ॥

# श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मक श्रीलक्ष्मीहयग्रीवाय नमः ॥

ॐ लक्ष्मीकान्तं भूवराहं भजेहं बादरायणम् । वादिराजहृदम्भोजमन्दिर वाजिकन्धरम् ॥ 1 ॥ भीमसेनानन्दतीर्थं वानरेन्द्रानह भजे । वादिराजगुरून् वन्दे वेदवेद्यगुरून् भजे ॥ 2 ॥ गुरून् वेदनिधीन वन्दे नारसिह्मगुरून् भजे । वन्दे नारायणाचार्यान् कर्णादिगणसेवितान् ॥ 3 ॥ वन्दे वृन्दावनाचार्यान् हयग्रीवमुनीन् भजे । शेषसीतापतिव्यासान् प्रणमामि गुरुप्रियान् ॥ 4 ॥

**अथ स्वाप्नवृन्दावनाख्यान प्रारभ्यते**
**श्री वादिराजगुरूभ्यो नम ॥**

## विप्र प्रकरणम् –

हरि. ॐ ॥ हयग्रीव चिदानन्द विग्रह सदनुग्रहम् । दशग्रीवच्छिद शापान्मणिग्रीवविमोचनम् ॥ 1 ॥ सुग्रीवाभयद सम्यगुग्रसेनविभूतिदम् । उग्रविग्रहहन्तार भक्ताभयकरग्रहम् ॥ 2 ॥ स्वनामग्रहणादेव निरस्तग्रहविग्रहम् । वृन्दावनगत वन्दे ब्रह्मरुद्रेन्द्रवन्दितम् ॥ 3 ॥ शक्रराज्यप्रदातार चक्रशङ्खधर हरिम् । नक्रमोचितहस्तीन्द्र वक्रबुद्धिविदारणम् ॥ 4 ॥ शुक्रे वक्रेऽपि हर्तार बलिराज्य महाप्रभुम् । वृन्दावनगतं वन्दे ब्रह्मरुद्रेन्द्रवन्दितम् ॥ 5 ॥ त्रिवक्रानुग्रह देव त्रिजगद्वन्द्यविग्रहम् । त्रिवेदवेद्यविभव त्रिलोकानामथेश्वरम् ॥ 6 ॥ त्रिविक्रम त्रिकालज्ञ त्रिधामानमथाच्युतम् । त्रिदशानुग्रह देव त्रिपुरघ्नभयापहम् ॥ 7 ॥ वृन्दावनगत वन्दे ब्रह्मरुद्रेन्द्रवन्दितम् । वृन्दावनगत देव मन्दाकिन्याः पद हरिम् ॥ 8 ॥ कन्दाशनमनोगम्य वृन्दारक समन्वितम् । अमन्दानन्दसन्दोह मन्दारस्याप हारिणम् ॥ 9 ॥ वृन्दावनगत वन्दे ब्रह्मरुद्रेन्द्रवन्दितम् । आत्मस्तोत्रजदोष तमात्मस्तोत्र विनाशयेत् ॥ 10 ॥ इन्द्रोरुद्र. कुबेरश्च यमो वरण एव च । अग्निर्निर्ऋतिर्वायुश्च चन्द्रसूर्यादयो

ग्रहा ॥ 11 ॥ देवोपदेवा भूदेवा **नरदेवाश्च** सर्वश । सकलत्रा सपुत्राश्च सर्वे सपरिवारका·
॥ 12 ॥ गीतवादित्रनृत्यैश्च जयशब्दपुरस्कृतै । नानोपहारबलिभि ब्रह्मघोषोपबृंहितै ॥ 13 ॥
उपासते हयग्रीव वृन्दावनगत सदा ॥ 13 ॥ त्रयस्त्रिशच्चकोटीना देवा· सन्निहिता सदा । मम
वृन्दावने पुण्ये हयग्रीवस्यचाज्ञया ॥ 14 ॥ तीर्थानामुत्तम तीर्थ वनानामुत्तम वनम् । क्षेत्राणामुत्तम
क्षेत्र मम वृन्दावनं द्विज ॥ 15 ॥ वन वृन्दावनं नाम नैमिष वनमेव च । वनं चैत्ररथ नाम नन्दनं
वनमेव च ॥ 16 ॥ वन तु खाण्डव नाम गुहस्य वनमेवच । वन तु पद्मक नाम सोमनन्दिवन
तथा ॥ 17 ॥ ब्रह्मारण्यमितिख्यात यद्वन वर्तते भुवि । आनन्दकानन चेति "यद्वन वर्तते
सदा ॥ 18 ॥ एतान्यन्यानि पुण्यानि वर्तन्ते भुवि कानिचित् । तानि सर्वाणि वर्तन्ते मम वृन्दावने
द्विज ॥ 19 ॥ तस्माद्वृन्दावनमिद सर्वाभीष्टप्रद सताम् ॥ 20॥ मन्दरो हिमवानद्रिर्माहेन्द्रो
गन्धमादन । विन्ध्याचलोऽथ मैनाक इन्द्रकीलक एवच ॥ 21 ॥ सुनाभ पारियात्रश्च वज्रनाभस्तथा
गिरि. । श्री पर्वत शेषगिरि तथा हेमगिरि स्वय ॥ 22 ॥ गोवर्धनो गोवृषश्च' गोमन्तः
पर्वतोत्तम । धीरः सुरनिधिर्मेरु गिरिभि. सहितो रमन् ॥ 23 ॥ विरजो गिरिजादेवीपते राश्रय
भूश्चय । रमापति प्रियान्साक्षद्देवाश्च रमयन्मुहु ॥ 24 ॥ उमापत्यालयेनापि मम वृन्दावनं
गत ॥24॥ एतेचान्येच बहव पर्वता. पुण्यवर्धना । मम वृन्दावने पुण्ये वसन्त्यरिधराज्ञया ॥ 25 ।
तस्माद्वृन्दावनमिद सर्वाभीष्टप्रद सता ॥ 26 ॥ गङ्गा सरस्वती कृष्णवेणी चैवमहानदी ।
मलापहा भीमरथी कावेरी कपिला नदी ॥ 27 ॥ गोमती गोपते पुत्री तथा गोदावरी नदी ।
मरुद्वृधा असिक्नीच शतद्रुश्च महानदी ॥ 28 ॥ वरदा सरिताश्रेष्ठा सरयूश्च महानदी । तुङ्ग-
भद्रेति विख्याता स्नाताना भद्रदायिनी ॥ 29 ॥ एता पुण्यतमा नद्य एतदन्याश्च या द्विज ।
पुष्करिण्यश्च याः सर्वा सर्वाण्यायतनानिच ॥ 30 ॥ मम वृन्दावने पुण्ये तत्पश्चात्तु सरोवरे ।
वसन्ति तीर्थपादस्य हयग्रीवस्यचाज्ञया ॥ 31 ॥ तस्माद्वृन्दावनमिद धवलाख्यं सरोवरम् । स्नानेन
दर्शनेनापि सर्वाघौघविनाशन ॥ 32 ॥ एव निशम्य मम भृत्यमुखाच्च सर्व वृन्दावनस्य विभव
सुजनाश्च **सर्वे** । श्रद्धालवो वितत भक्ति युता भजन्तु सर्वेष्टद सकलपाप विनाशनतत् ॥ 33 ॥
इद वृन्दावनस्तोत्र त्रिकाले य पठेच्छुचि. । नाकाले तस्य मृत्यु स्यात् मत्प्रसादान्नसशय ॥ 34 ॥

अश्वत्थचूत पनसाम्र सुनारिकेलधात्रीक्षुदण्ड कदलीवनमध्यगा या वृन्दावनाष्टक पिनाकिन्नूमता च
मध्ये स्थितातु धवलेति सुदिव्य नाम्नी ।। 35 ।। गङ्गा सुमङ्गल तरङ्गवती स्वभक्तप।पौघ
भङ्गकरिणी तरिणी भवाब्दे. । सामानिनी परमपावनपावनी च वृन्दावनस्य मम पश्चिमगा-
विभ ति ।। 36 ।। मुनिमत्रसमाहूता भीता दिव्यसरोगता । विष्णोः सुता लोकमाता सततं सुगति.
सताम् ।। 37 ।। हित्वातु मत्सुता स्थातु नचोत्सेहे कदापि हि । इति बुद्ध्यैव विष्णुस्तु देव
स्तत्तीरगोऽभवत् ।। 38 ।। हित्वामदाश्रया स्यातु न चोत्सेहे कदापिहि । इति बुद्धचैव रुद्रस्तु देवस्त-
त्तीरगोऽभवत् ।। 39 ।। हित्वामत्स्वामिन स्थातु नचोत्सेहे कदापिहि । इति बुद्धचैव हनुमान् देवस्त-
त्तीरगोऽभवत् ।। 40 ।। तस्मात्सरोवरमिद सर्वाघौघ हर परम् । इदतुयोनरः श्रुत्वा गति नेष्टा
लभेत किम् ।। 41 ।। सपिप्पलतरुर्भातिफल कल्पतरुर्यथा । वितरन्नुत्तराशाया मम वृन्दावनस्य
हि ।। 42 ।। अश्वत्थदेव सकलेष्टद देव देव भूदेववन्दित पद प्रददास्यभीष्टम् । वेदैकवेद्य सुज-
नाब्धिसुपूर्णचन्द्र भक्ताभयप्रद सुपुत्रमपुत्रिणा च ।। 43 ।। कि चित्र देव देवस्य ( वेग ) भक्ता-
भीष्ट प्रदातृता । यस्य किकरता याति देवा सर्वे वर प्रदा. ।। 44 ।। शेषशायिन् ममस्वामिन्
देवभूमन् नमोस्तूते । वृन्दावनपतेऽनन्तानन्तजन्माघनाशन ।। 45 ।। हयग्रीव समग्राङ्ग शुभाग्रचाक्ष्य-
वलोकन । जगद्ग्रासावसानेतु जगद्विग्रह ते नमः ।। 46 ।। वन्देऽरविन्दनयन मदनाभिराम मन्दाकि-
नीधरमुखैः त्रिदशै सुवन्द्यम् । वृन्दावनेच कृतमन्दिरमप्रमेय मन्दारभूमिजधर हयशीर्षमाद्यम् ।। 47 ।।
वृन्दावने मदन मोहनदेहभाज मन्दारमाल्यकृतपूजक वादिराजम् । नन्ददिपार्षद गणैर्नुतदेवराज
वन्देऽनिशं मम हृदिस्थहयास्यराजम् ।। 48 ।। हनूमन् भूरिमहिमन् रामनाम्नि सदा रमन् ।
रमारमण धामानि मासमापय ते नम ।। 49 ।। प्राभञ्जने अञ्जनासूनो कञ्जनाभप्रियाग्रणि ।
कुञ्जरायुतशक्तिच त्वं जनाना प्रयच्छसि ।। 50 ।। वृन्दावने मदन मर्दनरुद्रहृद्य सद्भि प्रवन्दित-
पद मदनाभिराम । वृन्दारकेन्द्रमरुदश सुमर्दिताङ्ग रक्षो विदार्य वरद प्रणमामि रामम् ।। 51 ।।
हयग्रीव हारभास्वद्ग्रीव भासुर विग्रहम् । सुरारि निग्रहकरसुदर्शन करग्रहम् ।। 52 ।। मुरारि
विग्रहधरपौण्ड्रविग्रह निग्रहम । पुरारि विग्रहकरासुरचक्रविनिग्रहम् ।। 53 ।। बलारिपौरुषहर-
बलिबन्धविनिग्रहम् । नमामि कमलात्मान विमलात्मानमच्युतम् ।। 54 ।। ब्रह्मात्मकौस्तुभमणि

चिन्मात्रानन्तसद्गुणम् । तन्मात्रनिर्मितगुण सन्मात्र कृतसद्गुणम् ॥ 55 ॥ अत्यद्भुताकारमूर्ते
प्रत्ययानन्तसद्गुण । दृप्तदानव विध्वसिन्मर्त्यसिम्ह नमोनम ॥ 56 ॥ नरस्तोत्रज दोष तं
नरसिह्मस्तुतिः सदा । नाशयेन्नरजन्मानि चैवमेव न सशय ॥ 57 ॥ वादिराजाख्य यतिना
वागीशकरजेनच । वृन्दावनगतेनैव ब्राह्मणस्वाप्नमूर्तिना ॥ 58 ॥ कृत स्तोत्रमिद पुण्य पठता
सम्पदा पदम् ॥ 59 ॥ वन्देऽरविन्दसदना वदनारविन्दा वृन्दावनाख्यसदना मदनस्य चाम्बाम् ।
वृन्दावनाख्यसदनानवना स्वभक्तान् मन्दाकिनीजनकपादहयास्य जायाम् ॥ 60 ॥ लक्ष्मी
लक्षणसम्पन्ना लक्ष्मणाग्रजकाड्क्षिणीम् । लक्षयामि क्षण लक्षवित्तदात्री कटाक्षत ॥ 61 ॥ भक्ता-
भयकरी नित्य श्रुत्वा गच्छन्ति सात्विकाः । शरण करुणापाड्गि मरण हर प्राणिनाम् ॥ 62 ॥
लक्ष्मीस्तुतिमिमा नित्य पठेद्यस्तु ( तसु ) विचक्षण । लक्षापराधिनमपि क्षमते नात्र सशय ॥ 63 ॥
नमामि नरकोत्तार नमामि नरकेसरिम् । नमामि नागशयन नमामि नगवासिनम् ॥ 64 ॥
नरकेचगतिर्यस्मात्स (यस्य स) काशात्पापिनो भवेत् । हिरण्यकशिपोः सोऽय नरकेसरिरुच्यते ॥ 65 ॥
प्राणिना प्राणभर्तायो ह्यरण शरणार्थिनाम् । तं प्राण प्राणिनां प्राण प्रणमामि परायणम् ॥ 66 ॥
त देवा प्राणयन्तीति ह्युक्थमुक्थेति य विदु । त प्राण प्राणिना प्राण मरणात्यागितोऽरणम् ॥ 67 ॥
एव शश्वत्स्तुत स्तुत्य कृतकृत्यस्तु सत्पति । कितवान्तकरो भूत्वा शतनोतु सता मम ॥ 68 ॥
अह भजे मुदा भजे हृदा भजे सदाम्बुजे । कृतालया कृपाल्या हरेरथाच्युतालयाम् ॥ 69 ॥
यस्मान्नरसमूहानामयन नयनाग्रत । नरकान्नतरेत् सोय नरनारायणोच्यते ॥ 70 ॥ रजतपीठ-
पुरमप्रतिम भुवि पुरुटपीठगतमप्रतिम हरिम् । करट बुद्धिरपि यातिको महान्सरट जन्म न जहाति
तद्गत ॥ 71 ॥ तादृश कृष्णमाराध्य चेदृश वेभव तव । यादृग कृष्णमाहात्म्यमीदृश नोच्यते
बुधैः ॥ 72 ॥ सोहं कृष्ण इति ख्यातो विष्णौ तृष्णाविधायक । कृष्णायाश्च वर दत्वा पुष्णा-
म्येतत्पतीन्सतीम् ॥ 73 ॥ ईदृश कृष्णमव्यक्त विष्णुतत्वोपदेशकम् । श्रुत्वा तृष्णा जहात्याशु
कृष्णे भक्ति करोत्यलम् ॥ 74 ॥ इतिमामुक्तवान् व्यासो दास भासुरविग्रहः । मन्दहासान्वितो
नित्य वृन्द सर्व प्रहर्षयन् ॥ 75 ॥ नमामि नारायणपादपद्म वदामिनारायणनामधेयम् । करोमि
नारायणपूजनच स्मरामि नारायणमूर्तिमेव ॥ 76 ॥ तदात्मक हयग्रीव सदानुग्रहकारकम् ।

तारक भवराशेर्मा मारक पापिनामिह ॥ 77 ॥ नमामि कामतात मा कुमारश्चेति मानयन् । रमायै काममात्रेच मेरौ यो दत्तवान्मुनिम् ॥ 78 ॥ तमीश्वर भास्वरसूर्यशौर्यद ममेश्वर सर्वजगच्चसेश्वरम् । मुनीश्वरै. सर्व सुरेश्वरेश्वरै वशेकर सर्व महेश्वर स्मरे ॥ 79 ॥ मूलरूपेण बालार्कसदृश कमलेश्वरं । नीलमेघप्रतीकाश लोकदृष्टचा महाबलम् ॥ 80 ॥ सान्द्र कमण्डलुधर चोपेन्द्र चाण्डलग्नकम् । भजामि भजनीय त भुजगेश्वरशायिनम् ॥ 81 ॥ कुजनाशङ्कया जातवृजिनार्तिहरचमे ॥ 82 ॥ अथ मधु युधि निहत्य मोदते बुधजनैरभिहितो मधुहेति । विधिभवेन्द्र गुरु पूर्वकै सुरै कुसुमवर्षिभिरीडितः ( रभीडित ) स्वराट् ॥ 83 ॥ शङ्खचक्र-गदाद्युदायुधै ( गदाद्युद्यदायुधै ) शाङ्‌र्गसञ्ज्ञितधनु प्रवरेण । बाणपूगसहिताक्षय तूणीभ्यामुपागमद-थाब्धिषु मध्ये ॥ 84 ॥ तद्युद्धमभवद्घोर समुद्र सलिले तदा । दृष्ट्वा तत् खेचरा सर्वे दुद्रुवु र्भयतो दिश ॥ 85 ॥ नभस्थल विशालाक्ष विमानावलिभि सुरा. । अलचक्रुर्मलयजैराक्तोर स्थल मालिन. ॥ 86 ॥ तदैव देवो भवपूर्वकै. सुरै सुवन्दित. शत्रुवधं चकुर्विति । तदोमिति प्रासवरेण वैरिण निवारयामास जहासवैहरि ॥ 87 ॥ जानुमात्रन्तु तस्यासीत् भानुमण्डलमप्यहो । कोनुत वर्णयेद्देव सूनुवर्य शृणुष्व भो ॥ 88 ॥ तदस्त्रशस्त्राणि स्वशस्त्रसञ्चयै. विवृश्च्य पुत्राप्रतिशस्त्रधारया । शिरोजहाराशु सुरै. समीडितो गिरीन्द्रवत्तच्च पपात कं भुवि ॥ 89 ॥ देवा सर्वे पुनर्याता तत्र स्वर्यान्तिकेचन । कैलास लोकविख्याता सत्यलोकंच केचन ॥ 90 ॥ ब्रह्मास्तुवन् परब्रह्म ब्रह्मलोक मुदा तदा । ययौ ब्रह्म हृदिध्यायन् ब्राह्मणैर्ब्रह्मवित्तमै ॥ 91 ॥ कैलास लोकपालैश्चबालार्कद्यु-तिरव्यय । शूली कालाग्निवद्भीम स्वलोकच ययौ मुदा ॥ 92 ॥ इन्द्रोपि सान्द्रसन्तोषादुपेन्द्रेणा-न्वितः प्रभुः । मुनीन्द्रै. सहमन्द्रैश्च चन्द्रलोकोपरिह्यगात् (यात्) ॥ 93 ॥ तस्यत्वक्चर्म मासैश्च मेदो मज्जास्थिभि सुत । रक्तै. रक्ता धरा चक्रे प्रकृत्यवयवैरिह ॥ 94 ॥ नखै खननवच्चक्रे कुन्तै कुन्तालकैरपि । पिण्डीकृत्यच तत्पङ्क सोऽनन्तमहिमः स्वराट् ॥ 95 ॥ मेदोभिर्निर्मितत्वाच्च मेदिनीति विदुर्बुधा । तद्धृताभरणैर्युक्ता तस्मात्ता धरणी विदु ॥ 96 ॥ लोकाधारत्वयुक्तत्वात्ता धरेति विदुर्बुधा. । स्वयतूर्वरितत्वाद्धि नष्टेषु स्वपतिष्वहो । उच्यते सापिचोर्वीति पर्वताद्यै रथान्विता ॥ 97 ॥ उर्वीच पर्वतधृतापि श्रियोऽवराऽभूत् । श्री पर्वतंच स्वयमेव धरत्यमोघम् ।

तस्माद्वराह महिषीच बभूव कोलादङ्के धृताच मुहुरप्यभिलाषिता सा ॥ 98 ॥ यस्या गर्वहरायेह वराहो नरक सुतम् । लोकराहु धरायाच सृष्ट्वारोहयदद्भुतम् ॥ 99 ॥ लोकपालपद ब्रह्मवरत पर्वतोपमान् । कारयामास पापाना राशीस्तेन दुरात्मना ॥ 100 ॥ स्वदष्ट्र चोग्रपापानां सिध्द्यर्थ-मददात्प्रभु: । जघान स्वयमेवाजौ कृष्णो वै रुक्मिणीपति ॥ 101 ॥ पातयामास कोपेन तत्तमोन्धं धरासुतं । ब्रह्माण मंभ्रणी पुत्र चकारारिनिषूदन ॥ 102 ॥ एव तत्पुत्रयोर्नीचत्वाधिकत्वतया मुने । तारतम्य चकारात्र शृणु पुत्र न संशय ॥ 103 ॥ इत्थ मधुहरेणैव निर्मितां धरणी पुरा । पौराणिको वदत्येव करुणां कुरु ब्राह्मणे ॥ 104 ॥ इमा भूम्याश्च महिमा मानवोपि शृणोतिय । वराहेण हयग्रीवस्वरूपेण महात्मना ॥ दत्ता तत्पदवीं याति य वदन्तीह भूपतिम् ॥ 105 ॥ श्रीमद्वादीभराजोह वादिराजोऽवद द्विजे । बुधा शृण्वन्तु मे दासा· सदा मम हितेरता ॥ 106 ॥ हरेर्वक्षस्थलेदृष्ट्वा श्रिय विस्मितवानहम् । पार्श्वयोरुभयोर्देवी करे चामर धारिणीम् ॥ 107 ॥ अङ्केच पङ्कजाक्षी ता शङ्खपाणेर्महात्मन । कुङ्कुमाङ्कितगन्धाढ्या कङ्कणादिविभूषिताम्॥ 108 ॥ अग्रत· पृष्ठतश्चापिह्यधस्थादुपरिस्थिताम् । सर्वत्रतां श्रिय दृष्ट्वा परमानन्द निर्भर ॥ 109 ॥ एतत्सर्व स्वाप्नपद्येन गर्व हित्वा सर्वे विप्रवर्यास्यजेन । श्रुत्वा चोर्व्यां शर्वगुर्वादिदेवान् दृष्ट्वोर्वशी यान्तु मा मानवेन्द्रा ॥ 110 ॥ इद वृन्दावनाख्यान ये पठन्ति मनीषिण । मुकुन्दावनमेवास्तु तेषा कन्दाशनाज्ञया ॥ 111 ॥ इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात् । समं सहस्रशीर्षस्य सूक्तस्य पुरुषात्कृतम् ॥ 112 ॥ यच्छृण्वता भक्तिरुदार सद्गुणे हरौ हरेर्लोक गते तथा मयि । भवत्यहो सर्वशुभाप्ति सन्मतीर्ददात्यजस्र सुत सत्यमेवतत् ॥ 113 ॥

ॐ इति श्रीमत्कविकुलतिलक वागीशतीर्थश्रीमच्चरण कर कमल सजातश्रीमद्वादिराजपूज्य चरणोदितब्राह्मणस्वाप्नवृन्दावनाख्याने स्तोत्रभागे अलोकिक विभागे ( भजन पर्वणि ) प्रथमाध्याय. समाप्त ॥

॥ श्रीकृष्णार्पणमस्तु ॥

# अथ द्वितीयाध्यायः

हरि ॐ ॥ इन्द्रोपि सान्द्रसन्तोषादुपेन्द्रेण सहागतः । वृन्दावनगत देव चन्द्रवद्रञ्जन दिश ॥ 1 ॥ नत्वा तस्मै स्तुति कृत्वा दत्वा तस्मै करं त्वरन् । श्रुत्वा तस्य कथामुक्त्वा वृत्रासुरवव तथा ॥ 2 ॥ विनिर्गत. पुन. स्वर्ग गुर्वग्निसहितः स्वराट् । गन्धेन चर्चितश्चोग्र दुर्गन्ध तेन वारयन् ॥ 3 ॥ इत्थ चाग्निस्तिग्मतेजा. मग्नश्चानन्दवारिधौ । भग्नेच यज्ञकृत्येच निर्माल्यं जग्मिवान्हरे ॥ 4 ॥ यमश्च यमुनाभ्राता कमनीय हरि प्रति । रमापति मम स्वामिन ननामागत. स्वयम् ॥ 5 ॥ निवेद्य स्वाधिकार तु दुर्जनाना च बाधकम् । साधकं सिद्धधर्माणां सम्पदा त प्रणम्य च ॥ 6 ॥ जगाम निमिषेणाय स्वालय कालयन्नरीन् । पालयन् शीलवृत्ताना त्याजयन् दुर्जनान् सुखात् ॥ 7 ॥ वरुणो वायुना सार्ध लोकाधिपतिना गुणिन् । शरण प्राप मद्वृन्दावने श्रीरमणं शृणु ॥ 8 ॥ स्वाधिकार निवेद्यास्मै गङ्गादार उदारधी. । सदारः प्रययौ धीरः सुधास्राव्यातपत्रग. ॥ 9 ॥ कुबेरो नरवाहश्च निर्ऋति त्वरया रयन् । गर्हयन् पुरत. शीघ्रमाससाद रमापतिम् ॥ 10 ॥ स्वाधिकार निवेद्यास्मै प्रसाद शिरसा धरन् । सादरः प्रययौ शीघ्रमुदार. स्वपुर नरे ॥ 11 ॥ रुद्रोपि वीरभद्रेण शूद्रमोहनरूपिणा । काद्रवेयादिभिः सार्धं द्रुतमायाद्रमापतिम् ॥ 12 ॥ मद्वृन्दावनमध्यस्थ सद्वृन्दैरन्वितोऽनमत् । तद्वृन्दावनग गोपं मद्वृन्दावनमध्यगम् ॥ 13 ॥ दृष्ट्वाच विस्मितो भूत्वा स्वनाथ राममेवच । अत्यन्त सतु सन्तोषभरितो भरतो यथा ॥ 14 ॥ वभूव सतु रुद्रोपि सरुद्रत्व जहाविह । रूपान्तरेण कैलास ययौ रूपान्तरेण च ॥ 15 ॥ अत्राप्यन्तर्गतं रा मंभजते निज सेवया । एव सर्वेऽपि देवाश्च स्वस्वयोग्य हरि प्रभुम् ॥ 16 ॥ भजन्ते निजसेवाभिः भक्तिमन्तोऽत्रनान्यथा । इत्थमष्टदिशापालै कृतवैभवमञ्जसा ॥ 17 ॥ मञ्जुमद्वृन्दावनस्य श्रुत्वाऽऽनन्दं स याति च । तस्माद्वृन्दावनमिद सर्वाभीष्ट प्रदं सताम् ॥ 18 ॥ भरोशङ्खमृदङ्गैश्च पणहानकगोमुखै. । कहाळताळ सम्मिश्रै दुन्दुभेः सिन्धुनि स्वनै. ॥ 19 ॥ तौर्यत्रिकैर्नृत्तगीतैर्वादित्रैर्भृत्यसस्तवैः । भातित्रिविक्रमोय मे मनोरथमहोत्सवे ( महारथे ) ॥ 20 ॥ पुरोडाशाशनै· सम्यगीडितः क्रीडया हरि। । रथस्थगरुडारूढो देवराट् भाति निश्चयात् ॥ 21 ॥

चतुर्वीथीषु भृत्येन कारित सुविशेषत । रथे गच्छन् मम मनोरथै कृतमहोत्सवे ।। 22 ।। महाप्रदीपावलिभिः कोलाहलमहास्वनैः । कृतै. करतलै. शब्दै भाति भक्तसुपालक ।। 23 ।। देवदुन्दुभयो नेदुर्जगुर्गन्धर्वकिन्नरा. । ननृतुश्चाप्सरश्रेष्ठा रथस्थेच त्रिविक्रमे ।। 24 ।। दिवादिनकरायुतप्रभ प्रियान्वित. प्रभुः । रथोपरि प्रयातीह प्रकीर्णविधिषु प्रिय ।। 25 ।। विमान सस्पृशन्तीह सुमानव ममाप्यहो । विर्सजिता इमे बाणा. नारायणरथोत्सवे ।। 26 ।। ब्रह्मरुन्द्रेद्र-पूर्वैश्च गीर्वाणन्द्रैरपीदृश । महोत्सवो न सदृष्ट. कर्मन्दीन्द्रकृतोत्सवे ।। 27 ।। सन्तोवसन्तवारीणि नारायणरथोत्सवे । सुवर्णकुम्भैरानीय चाम्भोधिशयन हरिम् ।। 28 ।। स्नापयामासुराश्वेनं प्राशिनकैरपि कात्स्न्येंत । स्नानेन शुद्धवृद्धास्ते तत्र सम्प्रश्नकोविदा ।। 29 ।। सन्तोवसन्तमभ्युद-वस्यन्तीति श्रुतिप्रिया । सन्तत चक्रिरे सर्वे वसन्तेनान्तिमोत्सवम् ।। 30 ।। सकुङ्कुमरसै स्निग्धै. महारजनवारिभि । कस्तूरीकर्पुराद्यैस्तैर्मिश्रितैर्हिमवारिभिः ।। 31 ।। दिव्य गन्धोदकैरङ्ग दिव्य मन्दारगन्धिभि । दिव्य द्रव्य समायुक्तै. दिव्य कुम्भप्रपूरितै. ।। 32 ।। दिविजा दिविजेन्द्राग्रे दीविरेवै दिवोत्सवे । दिवाकरे समुदिते दिविदेवोत्तमाज्ञया ।। 33 ।। धर्मराजकृते राजसूये राजपुरोहिता. । राजान. सद्विजाश्चावभृथ सस्नुर्यथा तथा ।। 34 ।। जगुर्गन्धर्वपतयो गान्धर्वेच विशारदा. । ननृतुश्चाप्सरश्रेष्ठा. नृसिह्मस्य महोत्सवे ।।35।। देवदुन्दुभयो नेदुर्बन्दिनो वन्दनोत्सुका । नन्दनाद्य शृणुष्वेह शतानन्दमहोत्सवे ।। 36 ।। वागीशपूर्वका. सर्वे सस्नुश्चावभृथ ततः । एवं देवाश्च देव्यश्च रथोत्सव वरे हरे ।। 37 ।। "दिवाकरे समुदिते दिविदेवोत्तमाज्ञया । धर्मराजकृते राजसूये राजपुरोहिता ।।38।। राजान सद्विजाश्चावभृथ सस्नुर्यथा तथा" । इम सार्धच श्लोकच त्यक्तवानसि विप्रक । पाकशासनलोकच नाकिभिर्नीयते कृति. ।। 38 ।। अत प्रमादो मा ते मे कुमार स्मर ब्राह्मण । सुमानव प्रभावन्त क्रमान्मत्साम्यसङ्गमम् ।। 39 ।। त्रिकोटियतिषु श्रेष्ठ मुकुटेनाङ्कितप्रियम् । सोहं समीडितगति पाठकै. शिष्ट नान्यथा ।। 40 ।। पश्यामिचाकाशविमानकोशे नाकीशमित्थ सुत सत्यमेव । कोनाशलोकस्यच नाशकोह तोकास्य सेवा कुरु सर्वदैव ।। 41 ।। इत पर कुरु सुत मम पुण्यदिन महत् ।। 42 ।। गदाभृत सदापाद हृदाध्याये मुदा भजे । बुधादृत कदाचिद्वा आपदालस्यमदा न मे ।। 43 ।। एव महोत्सववर श्रुत्वा

सर्वेऽपि वर्णितम् । कर्णामृत महाभाग कृतार्थास्ते न सशय । श्रद्धान्वितो हयग्रीवभक्तस्य सुमहात्मन ॥ 44 ॥ हे नन्दनानन्दपूर्णो भवामि तवदर्शने । कन्दाशन सहायेनामन्द वृन्दावनेऽनिशम् ॥ 45 ॥ तस्मात्त्रिकोटियतिभि. त्रिविक्रमरथोत्सवे । त्रिवेदवेद्य दृष्ट्वा च त्रिवारमपि नैव मे ॥ 46 ॥ तृप्तिर्नजाता मज्जात कुब्जापतिपरायण । धिग्जाड्यतु प्रजानाच न जातु मम साम्यगा: ॥ 47 ॥ त्वा विना साम्यसयुक्त मा विना काम्यमागतम् । को मानवो न जानामि विमाने मम साम्यग ॥ 48 ॥ तस्मान्मयित्वमप्यत्र ह्यमुत्रापि त्रिविक्रमे । सुत्रामपूजिते पुत्र भक्ति कुरु गुरूदिताम् ॥ 49 ॥ इत पर पारिबर्ह दातुमर्हसिमेर्हत. । गर्हित नार्हग्राम्यद्धार्बर्हिषद्धर्षण कुरु ॥ 50 ॥ इत पर पारिबर्ह गर्हित दातुमर्हसि । नमेऽर्हतो बर्हिषदा हर्ष कुरु गुरूक्तित ॥ 51 ॥ सुखीभव सखाय मा मखाग्रेणापि पूजय । शिखारहित ते दु खावाप्तिर्नच नखादपि ॥ 52 ॥ नरके नरकान्तच स्मरत्व नरकेसरिम् । गुरोर्ममापि कारुण्य ग्रहाणेह सुपुत्रक ॥ 53 ॥ हे नन्दन भोजन मे जात कर्मन्दिभि शनै । वृन्दावनपते सम्यक्मृष्टान्न मम तद्दिने ॥ 54 ॥ अतस्त्रिकोटियतिभिः प्रीतोऽस्मि तव पुत्रक । त्रिविक्रमोऽपि सुप्रीतश्चासीत्त्वद्भक्ति सत्कृत. ॥ 55 ॥ हे विप्र मम पुत्रस्य प्रसिद्धि सुप्रतिष्ठिता ॥ प्रजासु प्राप्तकामोहमभव नात्र सशय ॥ 56 ॥ ब्रह्मेश शक्रमरुदशभवै सुरेन्द्र. देवै समस्तयतिभि. पतिभि सुराणाम् । दृष्ट्वा रथोत्सववर सुरवर्यकार्य स्वर्यामिगश्वदवनात्सुचिराय जीव ॥ 57 ॥ मम वृन्दावन धीमन् कन्दाशन मदाञ्जनम् । सदानन्द ददानीति वदन् कर्मन्दिनामभूत् ॥ 58 ॥ अत कर्मन्दिभिर्वन्द्य वन्द्यानन्दनद बुध । गन्धद्वारानन्ददच मुकुन्दस्यापि नन्दन ॥ 59 ॥ यतय कृतिनो वृत्तप्रवृत्ताः शास्त्रवित्तमा । अमत्ता आपतन्तीह सतीच स्वपति यथा ॥ 60 ॥ तस्माद्यतिकुलै सेव्य मत लैङ्गिकमार्गिभि. । कृतालौकिककृत्यैश्च वृथालौकिकवार्तिका ॥ 61 ॥ कुत सत्य तपस्तप्तं जप्त दत्त मत तथा । वृथायत कृताचारो ये न सेवन्ति सात्वतम् ॥ 62 ॥ तस्माद्वृन्दावनस्थश्च सात्वता पतिमव्ययम् । गोपति गोकुलपति गोपीना पतिमापतेत् ॥ 63 ॥ एतत्सर्व स्वाप्नपद्येन गर्व हित्वा सर्वे विप्रवर्यास्यजेन । श्रुत्वाचोर्व्यां शर्वगुर्वादिदेवान् दृष्टवोर्वशी यान्तु मा मानवेन्द्राः ॥ 64 ॥ इद वृन्दावनाख्यान ये पठन्ति मनीषिण । मुकुन्दादनमेवास्तु तेषा कन्दाशनाज्ञया ॥ 65 ॥

इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात्। समं सहस्रशीर्षस्य सूक्तस्य पुरुषात्कृतम् ॥ 66 ॥
यच्छृण्वतां भक्तिरुदारसद्गुणे हरौ हरेर्लोकगने तथा मयि। भवत्यहो सर्वं शुभाप्ति सन्मतीर्ददात्यजस्र सुतसत्यमेवतत् ॥ 67 ॥

ॐ इति श्री ब्राह्मणस्वाप्नवृन्दावनाख्याने भजनपर्वणि अलौकिकविभागे द्वितीयाध्याय. समाप्त ।

॥ श्रीकृष्णार्पणमस्तु ॥

# अथ तृतीयाध्यायः



## 1. विप्र प्रकरणं श्लोक – ( 1-46 )

हरिः ॐ ॥ दास्यत्यय मनु दिव्य वादिराजइतिरितम् । दास्यत्यय मनु दिव्य वादिराजयती-
रितम् ॥ 1 ॥ ॐ श्रीकारद्वयेनापि पूर्वापर समन्वितम् ॥ नमःशब्दचतुर्थ्यन्तगुरुशब्दैश्च
मिश्रितम् ॥ 2 ॥ गृहाण त्वच विप्रेन्द्र सर्वां सिद्धिमवाप्स्यसि । यन्मन्त्र भीरवः सर्वे ग्रहा यान्ति
दिशो दश ॥ 3 ॥ सोह महानुभावोत्र नग्रहोऽथ बलिग्रहः । यद्गुणोच्चारणादेव पापसङ्घातपञ्जरम्
॥ 4 ॥ जहातिमर्त्य सतत सपापीतु कथ भवेत् । यत्पादस्मरणान्नित्यं नरा• सुकृतिन. सदा
॥ 5 ॥ सोहं पुण्यतमः शुद्धः सततं नात्रसशय । यो मां ग्रह विजानाति तस्य पुण्य हराम्यहम्
॥ 6 ॥ स याति नरक घोर यावद्ब्रह्मा चतुर्मुख । यो मां देवं विजानाति ऋजुस्थं पुण्यकृन्नरः
॥ 7 ॥ स याति निलय पुण्य यद्गत्वा न निवर्तते । आत्मस्तोत्र न कर्तव्यमहङ्कारेण धीमता
अज्ञाना बोधनार्थाय कर्तव्य नात्र सशय ॥ 8 ॥ हरिद्रोहगुरुद्रोहसुरद्रोहहरे परे । गिरिगह्वर
कासारे तपः कुर्यां हरेरिति ॥ 9 ॥ गिरिजापतिमाराध्य विरजार्कायुतद्युतिम् ॥ सुरजातचरं
देवमरिजातहर परम् ॥ 10 ॥ गुरुजातमतिं लप्स्ये नरजातिं समुत्सृजे । हरिजातगुणान् ध्याये
करजाताभय लभे ॥ 11 ॥ तेन च ब्रह्मणासाकं हरिमाराध्यभूरिशः । ताभ्या महानुभावाभ्या
मुच्येह कर्मबन्धनात् ॥ 12 ॥ एता कृत्वा शिलाया ममकृतिमथच स्थापयेत्ताच दृष्ट्वा
सन्तः सन्तोषभाजः सुमतिदमशमैर्युक्तमात्मानमीशम् ॥ ज्ञात्वा देवेषु मुख्य शुभगुणसुमुखं नित्य-
निर्धूतहेयं मामेव सद्गुणाढ्य शुभविततगतिं यान्तु सन्त. सदा ते ॥ 13 ॥ पञ्चाशद्योजनानान्तु
विस्तीर्ण कार्तभास्वरम् । हंसवाहनसयुक्त जाम्बूनदमय शुभम् ॥ 14 ॥ हेमराशिप्रतीकाश
हेमाद्रिशिखरोपमम् । नानामणिमय दिव्य नाना माल्योपशोभितम् ॥ 15 ॥ नानोपहारब
लिभिर्जयशब्दपुरस्कृतैः । नानामुनिगणै दिव्यैर्नाना देवगणैस्तथा ॥ 16 ॥ गन्धर्वैरप्स-
रोभिश्च सेव्यमानं समन्ततः । गीतवादित्रनृत्यैश्च छत्रचामरपूजितम् ॥ 17 ॥ वितानैरर्कवर्णैश्च

सेव्यमान समन्तत. । भक्ताभयकर दिव्य भुक्ति(भक्त) मुक्तिप्रदायकम् ॥ 18 ॥ अमृताना
सुपानैश्च सोमपाना तथैवच (सोमपानैस्तथैवच) । सुरभिक्षीरपानैश्च सेवित नित्यमेवच ॥ 19 ॥
विमान दिव्यमानच दीप्यमान सदायनम् । वृन्दावनोपरिगतं पूजयन्तु सदा मम ॥ 20 ॥ अह
सदा देवसभासभाजित सुभास्वरैर्दिव्यविभूषणैर्युत. । अहस्माते सुरमानिमानित सुमानयुक्तै.
सुमनोभिरञ्जसा ॥ 21 ॥ गुरुमखिलगुणज्ञ सद्गुणैकविदग्ध शमदम परिनिष्ठ सत्त्वनिष्ठ
वरिष्ठम् । सकलसुजनशिष्ट नित्यनिर्धूतकष्ट हयमुखपदनिष्ठ मा भजन्तु प्रपन्ना. ॥ 22 ॥
मच्छिष्यजनध्येयं मद्भक्तियुक्तो यश्च मनाग्रही । मत्सम्प्रदायसयुक्तो मन्मन्त्रजपशीलवान् ॥ 23 ॥
मत्कृति न शृणोत्यर्थ न जानाति न तुष्यति । न पूजयति मत्पाद न करोति सदाऽशुचि ॥ 24 ॥
स च विप्रबहिर्भूतो मद्द्रोहफलभाक् स्वयम् । पितृभि सह मज्जेत नरके न च मामक: ॥ 25 ॥
इत पर कियज्जन्मजात प्रेक्षति मत्कृतिम् । अवशिष्टन्तु वक्तव्य मुक्ति यास्यामि सद्गतिम् ॥ 26 ॥
नन्दनेऽत्र वने रम्ये स्यन्दनेऽ मन्दनन्दने । इन्द्राण्येन्द्रेण चानन्दो मन्दाकिन्या रमाम्यहम् ॥ 27 ॥
तथैव नन्दनप्रख्ये मम वृन्दावनेऽनिशम् । रमामि रमया देवै हयग्रीवेणचान्विते ॥ 28 ॥ नन्दन
स्यन्दनाकारे मम वृन्दावने ऽनिशम् । वन्दन नन्दनार्था ये कुर्वन्तु गुणनन्दिन ॥ तस्माद्वृन्दावनमिद
सर्वाभीष्टप्रद सताम् ॥ 29 ॥ वृन्दावनाख्यं मम मन्दिर सदा कन्दागनानन्दपद सुधीमताम् ।
वृन्दारकाणामिव मन्दराद्रि सन्दर्शनानन्दसुधा प्रदद्यात् ॥ 30 ॥ वृन्दावन सदवन सदन ममेद
इन्द्रानुजस्य सदन मदनस्य चेदम् ॥ वृन्दारकेन्द्रभवन परमम्यचेद नन्दादिपार्षदगणायनमेव चेदम्
॥ 31 ॥ मेरौ मारमण दृष्ट्वा रममाणो रमापते । करकञ्ज रमायाश्च गिरसा मानयाम्यहम्
॥ 32 ॥ ऊर्वश्याद्यप्सरस्त्रीणा शर्वस्यार्धांगिसान्निधौ । गर्वस्यार्थ कृत नृत्त सन्दृश्याम्यत्रचाद्भुतम्
॥ 33 ॥ कैलासे पर्वतश्रेष्ठे सविलासेक्षणा स्त्रिय । पलाशेक्षित चार्वङ्ग्य: कलाशे पीतपौष्पिका:
॥ 34 ॥ नर्तनं प्रेरयन्त्यो वैकर्तनद्युतिसन्निभा । मदन प्रेक्षकाश्चात्र प्राप्नुवन्वै मया विना ॥ 35 ॥
हरस्य करकञ्जंच हरेश्चक्रधर करम् । अह कराभ्या सङ्गृह्य तयोरन्तरग सदा ॥ 36 ॥
तथैव ब्रह्मणो लोके ब्रह्मानन्दात्मक हरिम् । हसवाहनसवीजच्चामर चारुहासिनम् ॥ 37 ॥
हयग्रीव सुराग्रण्य हारकेयूरधारिणम् । दृष्ट्वा मन्नयनानन्द मग्नश्चानन्दवारिधौ ॥ 38 ॥ एव

जनिशतावृत्त्या तद्भक्त्या तत्प्रसादत । लक्ष्मीकटाक्षतश्चाहृ मुच्ये तत्कुक्षिग क्षणात् ॥ 39 ॥
स्वर्गेच स्वर्धुनी याया स्वर्गिणा स्वागतेनच । स्वाराज्यपतिना सम्यक्स्वर्चितश्चस्वराडहम् ॥ 40 ॥
स्वर्गादूर्ध्वं हरेमार्गि गत्वानर्घ्य सुशीघ्रत । ब्रह्मणो धाम निसीमममानवसमन्वितम् ॥ 41 ॥
नमामि स्वामिन मारतातं माकान्तमव्ययम् । वसामि सुचिरं तत्र बिरिञ्चेन चिरं रमन् ॥ 42 ॥
वैष्णव धाम निसीम ततो यास्याम्यमायया । एतत्ते कथित विप्र सुप्रसन्नो भवामि ते ॥ 43 ॥
पुत्र सुत्रामलोकोय सत्राद्यै कर्मभिर्भवेत् । वैष्णव धामचाव्यक्तं योगिनामपि दुर्लभम् ॥ 44 ॥
सुलभ मम तत्सर्वं हरेर्ज्ञानादिसाधनै ॥ 45 ॥ एव सुमान सुमनोभिरञ्जसा सञ्जातमग्रच
सुजनार्यं सर्वं । कञ्जाक्ष गृह्णामि चिरन्तु जीव त्व जीवलोके कुजनार्तिद सन् ॥ 46 ॥

## 2. लक्ष्मीपति प्रकरण– ( 46–60½ )

मम वृन्दावने पुण्ये सुपर्वाणश्च नित्यश । वमन्ति पुण्यकर्माणो विशेषात्तेच पर्वसु ॥ 47 ॥
तस्माद्वृन्दावने पुण्ये पञ्चपर्वसु पूजनम् । दर्शनं सुजनानान्तु सर्वाघौघविनाशन ॥ 48 ॥
एतद्रहस्य मम पुत्र पश्यन् त्व सुप्रसिद्धि कुरु सत्सु नित्यम् । शृण्वन्तु सर्वे सुजनाश्च मत्कृति
सर्वेष्टदात्री शरणागतानाम् ॥ 49 ॥ इदमद्भुतमाख्यान मम वृन्दावनस्यच । शृण्वता पठतावापि
सर्वाभीष्टप्रद सताम् ॥ 50 ॥ इद तु सशयवता न तु शस कदाचन । विश्वासिना तु शस त्व
शेषशायिसदात्मनाम् ॥ 51 ॥ इद समाप्त मम शोभन महद्वृन्दावनाख्यान मनुत्तम नृणाम् ।
यच्छृण्वता भक्तिरुदारसद्गुणे हरौ हरेर्लोक गते तथा मयि ॥ 52 ॥ भवत्यहो सर्व शुभाप्ति
सन्मति ददात्यजस्र सुत सत्यमेव तत् । अत सता त्व वद मत्कृति मदा शुभाप्तये ते च ममात्र
कीर्तये ॥ 53 ॥ वेदवेद्य निरवद्य मद्दयावारिधे कदन कोविद वादिभि. । त्रिदश वन्द्य हयशीर्ष-
सद्मनि स्यन्दनेन विहरामि नन्दना ॥ 54 ॥ चिर जीव चिर जीव सुखी भव सुखी भव ।
ममाशीर्वचनेनैव हयग्रीवपरो भव ॥ 55 ॥ नन्दनस्यन्दनाकारे मम वृन्दावनेऽनिशम् । वन्दन
नन्दनार्थाये कुर्वन्तु गुण नन्दिन. ॥ 56 ॥ अलौकिकैरदृश्यार्थै लौकिकैः श्लोकभावितैः । अलौकि-
कानुवाकैश्च लौकिकैर्वाक्यविस्तरैः ॥ 57 ॥ लौकिकालौकिकजन साधारण्येन मत्कृतम् । इद

वृन्दावनाख्यानं श्रुत्वा सर्वेपि लौकिका: ।। 58 ।। लौकिकालौकिकफल प्राप्नुवन्ति न संशय: । अप्रयोगेति भासन्ते ते सर्वेपि ह्यलौकिका: ।। 59 ।। सुप्रयोगेति भासन्ते ते सर्वेपि तु लौकिका: । तस्मान्नकार्या दोषस्य शङ्काशूका सुबुद्धिभि. ।। 60 ।। विश्वास: सर्वदा कार्यो मत्कृतौ च सुनिश्चयात् ।। $60\frac{1}{2}$ ।।

### 3. विप्र प्रकरण श्लोक – ( $60\frac{1}{2}$–78 )

सुरराजप्रमर्देनायर राजो भव द्विज ।। 61 ।। नन्दीश्मृगराजोहं बादिर जो हरि भजे । अनेक-मूर्तिभिर्युक्त: स्थौल्य सौक्ष्म्यादिभिर्वृत: । अणिमाद्यष्ट सिद्धोह हयग्रीवस्यचाज्ञया ।। 62 ।। वृन्दावनेच मम नन्दन कानने च कैलासमेरुशिखरेषु तथैव नाके । सत्याख्यदिव्यभवनेच विरिञ्चरम्ये द्वीपे वसामि हरिणा सह दिव्यनाम्नि ।। 63 ।। ब्रह्मेशशक्रसुरकार्यधुरन्धरैश्च देवै: समस्तयतिभि: परिभि सुरणाम् । दृष्ट्वा रणोत्सववरसुरवर्यकार्यं स्वयामि शश्वदवनात्सुचिराय जीव ।। 64 ।। कर्तु चाकर्तुमप्येवमन्यथा कर्तुमेवच । समर्थोऽहं नसन्देहश्चेश्वरस्य सदाज्ञया ।। 65 ।। अह महानुभावश्च सर्वसम्पद्विधायक । कालश्चाय कलिरिति ह्यौदासीन्यं कृतं मया ।। 66 ।। परीक्षार्थंतु भक्तानामुक्त नैतदपेक्षया । अह मन्ये धन धान्य तनुचापि तृणोपमां ।। 67 ।। कनक जनकैर्हित्वा म्रियते शुनको यथा । जीवश्चायतु कञ्जाक्ष मञ्जीरमणिमौलिनम् । सञ्जानाति न सञ्जीवन् पुञ्जीकृतसुपापधी. ।। 68 ।। वैराग्याभरणश्चाहं करिसन्त्राणकारिणम् । वरुणा-द्गोपतित्राण मरणात्प्रागतोऽरजम् ।। 69 ।। यन्नदण्डोपमश्चाय मम दण्डोपि पण्डित । ब्रह्माण्डारम्भ-कोण्डोयं महोर्दण्डैकमण्डनम् ।। 70 ।। मम कौपीनमप्येतत्पापिनं पावयत्यहो । गोपीनां पतिना दत्तं पीताख्य पाणिर्नमितं ।। 71 ।। माणिक्यानान्तु श्रेणीभि शोणाच्छोणित शोभिनाम् । खचितं चार्चितं हर्मै याचित याचकै. सदा ।। 72 ।। यतीना पतिना दत्तं कृष्णेनाद्भुत कर्मणा । नारदस्याप्यदत्वातु मय्येवानुग्रहार्थिना ।। 73 ।। सूत्र कटितटे भाति गात्रमध्यं मम द्विज । कात्रकीर्तिर्यतीनान्तु शास्त्र-सिद्धविधिविना ।। 74 ।। वामनादाप्तवान्काम कमनीय कमण्डलूम् । शमनं क्षुत्पिपासे चाप्यमृतोप-मवारिणा ।। 75 ।। कम्बल रत्नजम्बाल चाम्बरं शाम्बर तथा । शम्भुना सम्भ्रमादाप्त कुम्भराक्षस-

भङ्गिना॥ 76 ॥ पादपीठे हठात्प्राप्ते दिव्यरत्नसुघट्टिते । त्वष्ट्राच बिट्ठलादेशात्काटिण्यरहिते शुभ ॥ 77 ॥ एव सर्वाणि वस्तूनि वस्त्राद्याभरणानिच । देवैरप्यन्वान्काममौदासीन्यविवर्जितै ॥ 78 ॥

**4 कश्चिद्विप्रेश प्रकरणं श्लोक** – ( 78-83 )

मत्कृतौ यस्य विश्वासो नास्ति तस्य यश श्रिय । आयुष्यं स्रवते भिन्नघटान्तस्थोदक यथा ॥ 79 ॥ इमश्लोकंतु विप्रेश सर्वदा सज्जनेष्विह । वदस्व त्व मदीयेषु मद्य।विषयेषुच ॥ 80 ॥ विप्र प्राणावधिर्यावत्तत्प्रमाणाविरोधतः । तद्वाण्याच प्रवक्ष्येह मद्वाण्या विष्टयानया ॥ 81 ॥ मत्कार्य विप्रकार्य वा न जानासीति बुद्धिमान् ॥ 82 ॥ क्रोधोपि मम नास्त्येव त्व चिर जीव पुत्रक ॥ 83 ॥

**5. व्यास भक्त प्रकरणं श्लोकः**– ( 83-104 )

विप्रार्थमेव सच्छास्त्र वक्ष्येह शृणु पोतक । श्रुत्वा सर्वच सद्धर्मं हृदिस्थ कुरु सर्वदा ॥ 84 ॥ अय तु ब्राह्मणः श्रीमन्मामेव शरण गत । वृन्दावनकृते पूर्व स्वस्याभीष्ट निवेद्य मे ॥ 85 ॥ शरणागत निर्हरण मरणतु विदुर्बुधा । करुणाकर तत्त्राणं करण सर्वकर्पणाम् ॥ 86 ॥ अह वित्तानि दास्यामि नेति बुद्धि. प्रजायते । कालश्चाय कलिरिति ह्यौदासीन्य कृत मया ॥ 87 ॥ सुन्दा तु मनुष्याणा दर्शनं स्पर्शन तथा । सम्भाषणच सद्बुद्धे नैव धर्मोऽत्र जातुचित् ॥ 88 ॥ अथापि विप्रवर्येऽस्मिन् क्ष्ये मम कलेवरम् । पूर्वानुभवसंस्कारकारणाद्विद्धि बुद्धिमन् ॥ 89 ॥ तदेव मत्कलेवर द्विजस्य यत्कलेवरम् । तदेव मत्कलेरित द्विजस्य यत्कलेरितम् ॥ 90 ॥ तदेव कल्पनेरित द्विजस्य कल्पनेरितम् । सुखस्य भोक्ता तद्देहे नासुखस्य कदाचन ॥ 91 ॥ सुखस्य कर्ता तद्देहे नासुखस्य कदाचन । तस्माच्च सुखभोक्तृत्व सर्वदा मे नचान्यथा ॥ 92 ॥ मार्तण्ड-मण्डलाभेद्वे कुण्डले पुण्डरीकिणा । प्राप्तेभशुण्डादण्डेन पण्डितेन विडम्बिना ॥ 93 ॥ शतपत्रोपम छत्र रत्नदण्डविचित्रित । वृत्रस्य शत्रुणा गोत्रभेत्त्राचाप्तं शशिप्रभम् ॥ 94 ॥ चामरेचामरेशेन रत्नदण्डे शशिप्रभे । सामरे सामरे लोके प्रेषिते मम पार्श्वयो ॥ 95 ॥ मयापीठ हठादाप्त तटिन्निभ मुपौरुटम् । त्वष्ट्रा सुघट्टित रत्नकोटिभि. कठिणेतरम् ॥ 96 ॥ एव सदा दिव्यमहाविभूतिभि.

# अथ चतुर्थाध्यायः



## 1 वादिराज भट्ट प्रकरण ( 1–22 )

हरि. ॐ ॥ वादिराजाख्य सन्मन्त्र सदाभज मदाद्विना । कदापि तव दासत्वे सशयो न वदादरात् ॥ 1 ॥ नूपुरे तूपरिप्राप्ते श्रीपरीते च रूपिते । कापरीक्षा परेशेन चापरैर्या निरूपिता ॥ 2 ॥ अङ्गदे भङ्गदेरीणां सङ्गदे सर्वदा हरे । अङ्गदेशे विराजेते तुङ्गहेम ममाङ्गज ॥ 3 ॥ मम केयूरमप्येतद्वायुरूप शिवायुतम् । मयूररवतो नित्य वायुत्व तस्य वक्त्यहो ॥ 4 ॥ मुद्राङ्गुलीयक रुद्रात्कद्रवा पुत्रेणचादृतम् । अद्राक्षद्रागभद्राणि द्रावयेद्राज्यद द्रुतम् ॥ 5 ॥ हस्ताङ्गुलीयक शस्त समस्तै रत्ननिर्मितम् । प्रहस्तादपि त राम. स्वहस्ताच्च ददौ मुदा ॥ 6 ॥ वरुणो दत्तवान्कामं मरणाद्रहितस्य मे । करण सर्वरत्नाना किरणाद्रञ्जन दिश ॥ 7 ॥ जनैरभेद्य विभवं स्फुटीकर्तु द्विजस्य मे । कुरु मद्वचनात्तोष तत्तोषेऽह सुतोषित. ॥ 8 ॥ कटक हाटकमय मम सद्रत्न कोटिकम् । काठक पाठकैराप्त हाटकाद्रौ रविप्रभम् ॥ 9 ॥ गले हारावलिर्भाति ताराणा तु कलेव मे । मिलिता चेन्द्रनीलैश्च पुलकाङ्कं करोत्यहो ॥ 10 ॥ एव सदाऽसंख्य सुखैश्च सम्युतो मखै र्दुरापै खगमुख्य दैवतै । दु खैरसम्भिन्नतरैश्च शश्वत् प्रमोदते देववरो मयि प्रभु· ॥ 11 ॥ काञ्चनीयाञ्चनीयान्तु काञ्चनीयान्मयाञ्चनात् । मा विना ता विना नाकी नाकिन्व नैति नान्यथा ॥ 12 ॥ चामीकरमयेमेरौ स्वामी करतलेन मे । कामे रतमुनीन् हित्वा मामेवाग्रे परामृशत् ॥ 13 ॥ मेरौ नारायणो यस्य कारुण्य मे परायणम् । रमाया. मा करे प्रादात् कुमारोयमिति ब्रुवन् ॥ 14 ॥ मर्त्यलोक तु हित्वाह सत्यलोकमितोऽगमम् । श्रुत्यभावं कर्तुकामो दैत्य कश्चिद्धतो मया ॥ 15 ॥ नाकेपि सर्वलोकेशा पाकशासन पूर्वका । पिनाकी च मया साक शोकहीन चतुर्मुखम् ॥ 16 ॥ दत्वा गत्वा कर तस्य स्तुत्वा श्रुत्वा सुधामयीम् । वाचं शोचन्तमात्मान पाप्मान च जहूरह ॥ 17 ॥ नरैश्च दत्ताचार्यत्वेप्यनेकापि सुमान्यता । भवतीह न सन्देहस्तच्छिष्यै. सर्वथा सुत ॥ 18 ॥ लोकैकगुरुणा दत्ताचार्यत्वे तु न कश्चन । मानो न जातो विप्रस्य चातो हास्यतर तु किम् ॥ 19 ॥ एवं हास्यास्पद चैतन्नकुरुष्व मम

प्रभो । विप्रान्तर्यामिण पूर्णपुण्यस्य तु गुणार्णव ॥ 20 ॥ त्वया कृतेतु सन्माने सर्वे कुर्वन्ति मानवा । मान मौनवता श्रेष्ठ कुरु मच्छासन मुने ॥ 21 ॥ लोकाना गुरुणोक्त तु श्लोकाना तु चतुष्टयम् । काकानामिव वाक्यानि शोकाना हरणे न भूत् ॥ 22 ॥

## 2 विप्र प्रकरणं ( 22–54 )

हे पुत्र दिव्य कटिसूत्र शुभाक्षसूत्र सच्छास्त्र वृत्तिभिरहो प्रतिभासि मे त्वं । मद्दत्तमन्त्रजपत. सुकृतैक पात्र वृत्रस्य शत्रुपदवी जितवानितीव ॥ 23 ॥ अग्रयासने सुनिहित मम पादपीठ सम्यक्प्रपूज्य विधिवत्परम प्रकाश । तस्याग्रत: परमदर्शन गुह्यसार व्याख्येयमेय मनिश प्रदिशामि तेऽद्य ॥ 24 ॥ आयुर्वर्च. श्रिय क्षेन विद्या च तव सर्वथा । दशग्रीव शिरोहर्ता मणिग्रीवाभयप्रद. ॥ 25 ॥ हयग्रीवो मम ग्रीवाभरणानि ददौ मुदा । सोदापुरेपिहि सदा मुदा मम गदाधर ॥ 26 ॥ पादाङ्गुलीयक प्रादाद्वादान्निर्जित वादिनः । एवमाभरणानातु कारणानि शरीरिणाम् ॥ 27 ॥ श्रुत्वा मच्छरणाना तु श्रोतृणा सुखदानि च । एवमाभरणान्याशा किरणाद्रञ्जनानि मे ॥ 28 ॥ श्रवणात्सर्वं पुण्यानि प्रापयन्ति मनीषिणाम् । इन्द्रो ममेन्द्रनीलाढच सान्द्रनीलाम्बुदप्रभम् ॥ 29 ॥ उपेन्द्रेरित हस्तीन्द्रं चतुर्दन्त ददौ मुदा । तथैव शुभ्राभ्र प्रभायुक्तमेक प्रबर्हकम् ॥ 30 ॥ प्रददौ मत्प्रिय विप्र प्रयुतौजसमप्यहो । उभौ तौ दन्तिनौ पुत्र गच्छन्तौ तौ (वै) ममाग्रत ॥ 31 ॥ वायुवेग मनोवेगवन्तौ कान्तौ महोन्नतौ । अह तु धृत्वा द्वे रूपे तावारुह महोमुने ॥ 32 ॥ चरामि सर्वलोकेशान् करोमि मम पूजकान् । तल्लोकपतिभि साक सल्लापैः सहितोऽगमम् ॥ 33 ॥ तेषा सन्दर्शयाम्यद्य मद्वृन्दावन वैभवम् । वाजिन भ्राजमान वै देवराजश्च मे द्विज ॥ 34 ॥ समाजे निर्जराणा तु सौजन्याद्वै ददौ मुदा । तमश्व नि स्व (श्व) मप्यश्व शश्वद्वायुमनो जवम् ॥ 35 ॥ सुस्वर भास्वर पार्श्वे कार्तस्वर विभूषितम् । अहमारुहमाहार्यनीहार मिव लाघवात् ॥ 36 ॥ मनोजवेन शर्वादीन् सर्वान् वै देवता गणान् । गत्वा श्रुत्वाऽगम भुमि तै साक नाकिभि सुत ॥ 37 ॥ तेषा सन्दर्शयाम्यद्य मद्वृन्दावन वैभवम् । एव विमान सन्मान कृत्वा मे दानवान्तक· ॥ 38 ॥ भानु तेजोनिभ प्रादात् कीनाशेन सुमानितम् । किम्वतकासीति वाक्यान्नह्यतक भय च

मे ॥ 39 ॥ इति बुद्ध्या मयाचोक्त कीनाशेन सुमानितम् । अह देदीप्यमानेच विमाने मानवोत्तम ॥ 40 ॥ मानित: सुमनोभिश्च कनकाम्बर भूषणै । तद्गताना तु देवाना मद्गतैक मनोयुजाम् ॥ 41 ॥ तेषा सन्दर्शयाम्यद्य मद्वृन्दावनवैभवम् । नानावाहन सस्थोह नानामानै सुमानित: ॥ 42 ॥ नाना मणिगणैर्नित्यं नाना मुनिगणैस्तथा । गन्धर्वैरप्सरोभिश्च किन्नरोरग राक्षसै ॥ 43 ॥ सिद्धै साध्यैः मरुद्भिश्च बद्धस्नेहै सुबुद्धिभिः । किमत्र बहुनोक्तेन मद्वैभव समो न हि ॥ 44 ॥ एव महावैभवमेव भोक्ष्ये सभासुभास्वत्प्रतिम ऋभूणाम् । महानुभावस्य मधुद्विष सदाभक्तस्य किंचित्रममुत्र वैभवे ॥ 45 ॥ एतत्ते लेशतश्चोक्त मम वैभव राशित । साकल्याद्वक्तुमेवं ते नाल वर्षशतैरपि ॥ 46 ॥ य एतद्वै शृणोत्यद्धा श्रद्धायुक्तो बुधाग्रत. । मद्धाम पद्धति याति बद्धभावो मधुद्विषि ॥ 47 ॥ ब्रह्मणो दक्षिणासतु वायोर्वामासमेवच । गृह्य सव्येनराभ्या मे पाणिभ्या संस्थितोऽभवम् ॥ 48 ॥ ब्रह्मणो दक्षिणे कर्णे वायोः कर्णे तु वामके । सविद तु करोम्यद्य विष्णोस्तत्वस्य निर्णये ॥ 49 ॥ रमापते कर गृह्य सञ्चरामि रमामि च । श्वेतद्वीपे बुधालापे सदा पाप हरे परे ॥ 50 ॥ श्वेतद्वीपेऽर्णवानूपे समीपे श्रीपतेरभूत् । सुधारूपे करारोपे शरीरे पुलकाञ्चनम् ॥ 51 ॥ अतो मयाच पूर्वेद्युर्नोक्त स्वप्ने तव द्विज । मत्पुत्र चरणाम्भोज भज मुक्ति र्भविष्यति ॥ 52 ॥ मद्वृन्दावन मध्यस्थं तद्वृन्दावनचारिण. । यद्गोपालेति नामास्य तद्गोपाला. समाययु ॥ 53 ॥ मद्वृन्दावन मध्यस्थ सद्वृन्दावनचारिणः । यद्वृन्दावनता ह्यस्य तद्वृन्दाश्च समाययु ॥ 54 ॥

### 3. व्यास भक्त प्रकरणं ( 54-86½ )

इदं वृन्दावनाख्यान सदानन्दादि साधनम् । द्विधा व्याख्यानवत्कृत्वा ममानन्दपरो भव ॥ 55 ॥ मन्नन्दन ममानन्दप्रद सद्वन्दनादिना । विलसद्वदनाम्भोज द्विजानन्दप्रदो भव ॥ 56 ॥ अह तु गत्वाचायास्ये चिरजीव सुखीभव । अह गत्वा बदर्यां तु कदर्याणा भयङ्कर. ॥ 57 ॥ सोदर्यादादृतो नित्य गिरिदर्यां वसाम्यहम् । तत्रापि दृष्ट्वा श्रीवास व्यास भासन्तमावसम् ॥ 58 ॥ पृच्छामि तच्छासनानि स्वच्छान्यादृच्छकानिच । तत्रानन्दादिमात्रेण मात्रास ससृतेस्त्वया ॥ 59 ॥

कर्तव्य. सतत विष्णु: स्मर्तव्य. सृतिनाशन । इति सम्बोधितो नित्य ससाराम्भोधिभीतित ॥ 60 ॥
पादमूलमुपासेह पापहारि कृपायुज । इति जानन्ति मा नित्य येनरा पापशीलिन.
॥ 61 ॥ तेषा पापानि हर्ताह हयग्रीवस्यचाज्ञया । शिष्याणामयुते तस्मिन् पुष्पाणा कृतमालिकाम्
॥ 62 ॥ पुष्यरागप्रभा दिव्या तुष्यन् मह्य ददौ मुदा । भारतार्थं समाख्याय मारुतेरित बुद्धिना
॥ 63 ॥ कीर्तिमावृत्य लोकेऽस्मिन् मूर्ति प्रार्थ्यामुदाददी. । युक्त्याख्य मल्लिकाभिश्च भक्त्या
मत्पादमर्चयन् ॥ 64 ॥ कृत्यानया सुतुष्टोहं मत्यामाला ददामि ते । क्षुत्क्षामतृट्परीहर्त्री दात्री
मुक्तेश्च पद्धतिम् ॥ 65 ॥ कृत्या मया तु दत्ते य त्रायता त्वा सदैवतु । इतिमामुक्तवान्व्यासो दास
भासुर विग्रह. ॥ 66 ॥ मन्दहासान्वितो नित्य कन्दाशनरत मुनिम् । सुखोपविष्ट. सहृष्ट:
सुदृष्टिर्विष्टरश्रवा ॥ 67 ॥ दृष्टवान् तपसायुक्तं पुष्टाङ्ग माधियोत्कटम् । पस्पर्शपाणिनामेऽङ्गं
प्राणनाथप्रियोह्यसौ ॥ 68 ॥ द्वैपायनो महायोगी वैशम्पायनमानित. । यादृक्पारत्रिक विप्राद्वैभवं
भुविकीर्तितम् ॥ 69 ॥ तादृक्सार्वत्रिक नैव तपसश्चापि दुश्चरात् । नर नारायणोदेवो वरनारी-
परायण. ॥ 70 ॥ हरे रामायण सार्थ स्वराट् पारायण व्यधात् । कदलीवनमध्यस्थ द्विदलीकृत
राक्षसम् ॥ 71 ॥ सदलीकृतपादाब्ज मदलीक विना भजे । इतीय बादरीवृत्तिर्मधुरालापचित्रिता
॥ 72 ॥ धरित्री पापहानिच दात्रीसत्य मयोदितम् । "भारत भारतीभर्ता कीर्तयन् सेवते हरिम्
॥ 73 ॥ मारुतो मारुतस्त्व हि नित्यं कीर्तय भारतम् । समीरणो जगत्प्राण कारणात्कुरुनन्दन:
॥ 74 ॥ भूत्वा रणमणि कृत्वा हत्वा सर्वगुणाधमान् । कृष्णानन्दस्य पात्राणि पूरयामास वीर्यवान्
॥ 75 ॥ भीमो मागध भीमस्य मारो धीरपराक्रम । रोदयामास देवारीन् बादरायण सादर
॥ 76 ॥ बभूव प्रभया युक्त स्वभयादभय न भून् । सभास्वशुभ भावाना भारती भावक्षोभिनाम्
॥ 77 ॥ कुत्सित कीचक छित्वा पाचको याचको यथा । शोचक सर्वदैत्याना मोचको
व्यसनात्सत." ॥ 78 ॥ इति मामुक्तवान्व्यासो दास भासुरविग्रह । मन्दहासान्वितो नित्य वृन्दे
हास समर्पयन् ॥ 79 ॥ इतीमा बादरीवृत्तिमादराद्यस्तु वक्ष्यति । बादरायण सम्प्रीतिं सादर
याति निश्चयात् ॥ 80 ॥ पूर्णप्रज्ञस्तु मा दृष्ट्वा पूर्णसन्तोष सभृत । पूर्णानन्दश्च व्यासोपि
पूर्णानन्दास्ततोऽपरे ॥ 81 ॥ मानवस्वामिनो वार्ता कामिना सन्निवेद्य मे । मामेव पुनरागन्ता

ब्राह्मण. शृणु मामक: ।। 82 ।। राजभृत्यो यथा वार्तां सर्वेषा सन्निवेद्यच । पुना राजानमेवैति मनास्यस्य प्रहर्षयन् ।। 83 ।। शुभस्य वार्तामाहर्तु सर्वे कुर्वन्ति मान्यताम् । तथामद्वैभवाहर्तुः सर्वे कुर्वन्तु मान्यताम् ।। 84 ।। मद्वार्तं मद्गतप्राण ब्राह्मण प्रापण गुणान् । येऽवजानन्ति नाकीन्द्र भृत्य मद्द्रोहिणश्च ते ।। 85 ।। मद्द्रोहान्नरकानेव परकायप्रवेशिन । भूत्वा भविष्यन्ति भूमौ भूतप्रेत पिशाचका ।। 86 ।। तस्मात्कुर्वन्तु सन्मान ब्राह्मणाय तु मानवा. ।। 86½ ।।

## 4 वादिराज भट्ट प्रकरण – ( 87-92 )

तन्मानोऽपिममैवेह तदन्तर्यामिणो मुने ।। 87 ।। ब्राह्मणस्य मुखेनैव चेदमुक्तमिति प्रभो । माकुरुत्वमविश्वास विश्वास कुरु सर्वथा ।। 88 ।। " तववैभवविख्यात्यै भुवि को वर्तते युवन् । वद त ुवदता श्रेष्ठ त्ववत त्ववता वर ।। 89 ।। शिबिकामधिरोप्यार्त शुभवार्तांच वाचकम् । अभय तस्य दत्वा त्वमभरस्त्व द्विजोत्तम " ।। 90 ।। इति मामुक्तवान्व्यासो दास भासुरविग्रह. । मन्दहासान्वितो नित्य वृन्दे हासं समर्पयन् ।। 91 ।। तस्मात् द्विजस्य सन्मान सुजनोत्तम त कुरु ।। 92 ।। एतत्सर्वं स्वाप्नपद्येन गर्व हित्वा सर्वे विप्रवर्यास्यजेन । श्रुत्वा चोर्व्यां शर्वगुर्वादि देवान् दृष्ट्वोर्वशी यान्तु मा मानवेन्द्राः ।। 93 ।। इद वृन्दावनाख्यान ये पठन्ति मनीषिण । मुकुन्दावनमेवास्तु तेषा कन्दागनाज्ञया ।। 94 ।। इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात् । सम सहस्रशीर्षस्य सूक्तस्य पुरुषात्कृतम् ।। 95 ।। यच्छृण्वता भक्तिरुदार सद्गुणे हरौ हरेर्लोकगते तथा मयि । भवत्यहो सर्व शुभाप्ति सन्मती ददात्यजस्र सुतसत्यमेव तत् ।। 96 ।।

ॐ इति श्री ब्राह्मणस्वाप्नवृन्दावनाख्याने अलौकिक विभागे भजन पर्वणि चतुर्थाध्याय समाप्त. ।

।। श्रीकृष्णार्पणमस्तु ।।

# अथ पञ्चमाध्यायः

## 1 विप्र प्रकरणं श्लोक – ( 1-2 )

हरि ॐ ॥ अस्यां मम कृतौ यस्य विश्वासो नास्ति दुर्मते. । तस्मिन्नाशास्यता नस्याद्व्यासस्यैवाज्ञया हरे ॥ 1 ॥ सर्वैर्गिरीन्द्रसदनैर्मदनोपिदारै दूरीकृतश्च बदरी पुरवासिभिस्तै । यस्याश्रयात्सकल देवतदेवतेश व्यास सुशान्तमनिश मनसा स्मरामि ॥ 2 ॥

## 2. लक्ष्मीपति प्रकरण श्लोक– ( 3-15 )

लक्ष्मीपते सूक्ष्ममते मत्कथामृत वारिणा । सतामाध्यात्मिकाद्यग्नि शमय त्व सुखीभव ॥ 3 ॥
त्रिवाचापि मया चोक्त तव बुद्धिर्यथा तथा । कुरु विप्रस्य वचन न मृषेति विचिन्तय ॥ 4 ॥
मन्महामहिमा वक्तु मानवाना न शक्यते । मापतेर्भक्त माहात्म्य कामते· शक्यते नु किम् ॥ 5 ॥
यादृग्वैभवभोगस्य स्थान भुवि दिवि स्थितम् । तादृग्वैभवरूपेण तत्तल्लोके वसाम्यहम् ॥ 6 ॥
वहुरूपाणि धृत्वाह सहभोग तु दैवतैः । इह भुक्त्वा दिविस्थोपि सह मुच्ये विरिञ्चिना ॥ 7 ॥
इतिमद्वैभवाहर्तु. भुविप्राप्य च(स्य) मद्गतिम् । या गति प्राप्य मोदन्ते तामप्यस्य ददाम्यहम् ॥ 8 ॥
इति मद्वैभवगति श्रुत्वा मद्भक्ति सयुता । मत्पादाब्जगति यान्ति मद्दयाविषयाश्च ते ॥ 9 ॥
एव श्रुत्वा विप्रवर्यात्सुगूढमाश्चर्यभूत मम वैभव तु । पुत्रचैतत्सुप्रसिद्ध कुरु त्व मित्रो यथैवान्धकार-
स्थमर्थम् ॥ 10 ॥ उक्तानि सर्व कर्माणि मम वैभवपर्वणि । सर्वे वदन्तु भद्राणि सदा पर्वणि
पर्वणि ॥ 11 ॥ तेषामिष्टानि पुष्टानि भविष्यन्ति न सशय । तेषा कष्टानि नष्टानि भविष्यन्ति
न सशय ॥ 12 ॥ सत्य सत्य पुन. सत्य चोद्धृत्य भुजमुच्यते । विप्रेणोक्त च यत्सर्व तत्सर्व च
मयोदितम् ॥ 13 ॥ हयग्रीव महोग्राव ससारग्राहनिग्रहम् । मणिभास्वच्छुभग्रीव शृणु वन्दे
कृताञ्जलिः ॥ 14 ॥ इत पर न वक्ष्येह परस्याक्षेप्कारणम् । कुत शर प्रयोक्तव्योऽसुरस्या
योग्यबुद्धिन ॥ 15 ॥

**3. वृन्दावनाचार्य प्रकरण श्लोक–** ( 16–27 )

तस्माद्वृन्दावनाख्यान मन्दाना शङ्कितु मुने । कन्दाशनेन्द्र रचित त दोष न ददाति च ॥ 16 ॥
मन्मन. सन्निकर्षेण त्वन्मन स्मृति कारणम् । दिने दिनेऽभिजानीहि कानीह सुकृतानि ते ॥ 17 ॥
मन्नेत्र सन्निकर्षेण नयन ते सुदर्शनम् । दिने दिनेऽभिजानीहि कानीह सुकृतानि ते ॥ 18 ॥
मत्कर्ण सन्निकर्षेण त्वत्कर्णं शृणुतेऽनिशम् । दिने दिनेऽभिजानीहि कानीह सुकृतानि ते ॥ 19 ॥
मज्जिह्वायुक्त त्वज्जिह्वाप्यंहो मुग्वचन भवेत् । दिने दिनेऽभिजानीहि कानीह सुकृतानि ते ॥ 20 ॥
मद्घ्राण सन्निकर्षेण त्वद्घ्राण जिघ्रते ऽनिशम् । दिने दिनेऽभिजानीहि कानीह सुकृतानि ते ॥21 ॥
मद्धस्त सन्निकर्षेण त्वद्धस्त कुरुते कृतिम् । दिने दिनेऽभिजानीहि कानीह सुकृतानि ते ॥ 22 ॥
मत्पाद सन्निकर्षेण त्वत्पाद चलते पदम् । दिने दिनेऽभिजानीहि कानीह सुकृतानि ते ॥ 23 ॥
सर्वाणि करणानीति युक्तमत्करणानि ते । कर्माणि पुण्यरूपाणि कुर्वन्ति मम सन्निधेः ॥ 24 ॥
तस्माद्वृन्दावनाख्यान मुकुन्दानन्दकारणम् । मन्दाना बोधनार्थाय कन्दाशन कृत त्वभूत् ॥ 25 ॥
ए व निशम्य मम भृत्य मुखाच्च सर्वं वृन्दावनस्य विभवं सुजनाश्च सर्वे । श्रद्धालवो वितत भक्तियुता
भजन्तु सर्वेष्टद सकलपाप विनाशन तत् ॥ 26 ॥ मत्पाद स्मरणेनैव जनानामणिमादिता ।
प्राणनाथ पद हित्वा कोणप भजते नु किम् ॥ 27 ॥

**4. व्यासभक्त प्रकरण श्लोक–** ( 28 )

शिलास्था कुरु पुत्रेश बलात्कारेण मत्कृतिम् । स्थलांतरगता विद्धि स्वलाभार्थं च नाकिना ॥ 28 ॥

**5. बहुभक्त प्रकरणं श्लोक–** ( 29 )

देवैरप्यर्थितास्वार्थं आर्तिनाशाय पार्थिवै । प्रार्थ्येति किमु वक्तव्यं सार्थीकुरुत मत्कृतिम् ॥ 29 ॥

**6. व्यासभक्त प्रकरणं श्लोक.**– ( $30-38\frac{1}{2}$ )

चरमाज्ञा ममैवेय परमार्थेति विद्धिताम् । कच माचान्यथाबुद्धि परमानीतिरीर्यते ॥ 30 ॥ अहं रमामि रामेण रमारमणरूपिणा । अहं पुष्णामि कृष्णेन भाषित विष्णुरूपिणा ॥ 31 ॥ अह पृच्छामि मत्स्येन सच्छास्त्राणि प्रसङ्गत । गच्छामि कच्छपेनैव स्वच्छरूपेण स्वेच्छया ॥ 32 ॥ वराहेण करारोहे नमितोह च राहुणा । नृसिह्मेन कृतस्नेहे सैह्मिकेयेन पूजित: ॥ 33 ॥ वामनेनच सन्माने कामेनापि सुमानित । भार्गवेणैव चानर्घे माने सति च स्वर्गिणा ॥ 34 ॥ गर्गादि मुनिभि. सार्धं श्रद्धयाराधितोस्म्यहम् । बुद्ध प्रबुद्ध सिद्धेशो ऽबद्ध बुद्धिप्रबोधक ॥ 35 ॥ बौद्धराद्धान्तसिद्धार्थ देवाना बोधयत्यलम् । स देवो वरदो मह्य कदाचेह समागत ॥ 36 ॥ इति मामुक्तवान्सूक्त स्वपादेचापदात्यजत् । कल्की सङ्कल्प ससिद्धो म्लेच्छमूलकुलान्तक: ॥ 37 ॥ अनल्पमपि चालस्य चालयामास लीलया । एव दशावतारेषु दुर्दशारहितेषु च ॥ 38 ॥ सदा सुशरण प्राप्य तद्दासत्वमवाप्तवान् ॥ $38\frac{1}{2}$ ॥

**7. विप्र प्रकरण श्लोक** – ( $39-43\frac{1}{2}$ )

पूर्वं मयोक्त श्लोकेषु सांशायिकमति त्यज ॥ 39 ॥ त्वत्कर्णाभरणमुद्दिश्य मणिव्यत्ययत: कृतम् । अह ब्राह्मण ते वामकर्णेसस्थित सन्मणिम् ॥ 40 ॥ पाणिना दक्षिणे कर्णे न्यस्य तद्गतकामणिम् । वामकर्णे पुनर्न्यस्य मम पुण्यवचांस्यहो ॥ 41 ॥ अथोपदिष्टवानस्मि स्पष्टं मद्धस्तकर्म ते । कर्णे ते दक्षिणे विद्वन् पश्य हस्तेन सस्पृशन् ॥ 42 ॥ इतीद विद्धि सद्बुद्धे वृद्ध मद्धस्त कर्म च । शुद्धभावेन मामद्धा भज क्रोधंमम त्यज ॥ 43 ॥ अन्वारुहमहोस्वर्गं सहदेवैर्वसाम्यहम् ॥ $43\frac{1}{2}$ ॥

**8 बहुभक्त प्रकरण श्लोक**– ( $44-44\frac{1}{2}$ )

इदमाश्चर्यवृत्त मे श्रुत्वा सर्वेपि गर्विता ॥ 44 ॥ चर्वित मे मया सर्वं गर्व त्यजत शीघ्रत ॥ $44\frac{1}{2}$ ॥

**9 वृन्दावनाचार्य प्रकरण– ( $45–60\frac{1}{2}$ )**

कर्तु चाकर्तुमप्येवमन्यथा कर्तुमेव च ।। 45 ।। समर्थोह् न सन्देहश्चेश्वरस्य सदाज्ञया । इति पूर्वं मया प्रोक्तमनुसन्धत्स्व बुद्धिमन् ।। 46 ।। मार्तण्ड रथमारुह्य स्वाण्डार्तेन सुमानित शरकाण्डज मातृणा करि(र)काण्डेन पूजित. ।। 47 ।। भानुमण्डलगं विष्णु कोनु ब्रह्माण्ड सस्थित । दोर्दण्डादर्चयन् साक्षान्माविनाण्डस्य शक्तिमान् ।। 48 ।। सूर्यस्य रथमाश्रित्य वीर्यस्य परमात्मन. । आर्यस्यापि ममास्यान्त कार्यस्यान्त गतं मया ।। 49 ।। एव सुष्टु रथे तिष्ठन् पृष्ठत परमात्मन. । काष्ठान्त यामि कामेन स्पष्ट पश्यश्च सज्जनान् ।। 50 ।। शिम्शुमार समासाद्य कसमारेण चादृत । सम्सरामि पुनर्नाह् कसरामीति याचये ।। 51 ।। सदेवो वरदो मह्य करदाय महाप्रभु. । स्मरदाश्रित दुष्कर्म विददार हरि· स्वयम् ।। 52 ।। तत्पुच्छान्त न पश्यामि स्वर्गमूर्तेर्महात्मन । पृच्छामि स्वच्छतत्वानि तत्पुच्छगत तेजसाम् ।। 53 ।। सचोपदिष्टवान् स्पष्टं ज्योतिर्मण्डल-मण्डनम् । ध्रुवादि सर्वलोकाना पालकत्व स्ववैभवम् ।। 54 ।। एवं क्रमेण सर्वाणि ज्योतीषि-गतवानहम् । तेजसा सर्वचक्षूषि विमुष्णन् विष्णवनुज्ञया ।। 55 ।। तिष्ठन् सूर्याभिमुख्येन कष्ट कुर्वन् अध सदा । स्पष्ट तष्ये महात्मान दृष्टयाचेक्षन् तमीश्वरम् ।। 56 ।। रथे तिष्ठन् पृथुग्रीव ( तथो ग्रावान् ) वृथाग्रह सुनिग्रहम् । ध्याये माया विना काय पातयित्वा च दण्डवत् ।। 57 ।। श्रेयोयास्ये त्वयावार्य मयोक्तं सत्यत. कुरु । इति सम्प्रार्थयन्नित्य श्रुत्यन्तेषु विचारयन् ।। 58 ।। कृत्य सर्वतु हित्वाह् स्तुते कृत्य करोमि ते । प्रभुस्तदा प्रसन्नात्मा प्रवणं मा प्रकृष्टधी ।। 59 ।। प्रावोचत्सुप्रसन्नोस्मि प्रकृत्या मोचये प्रिय । इति मामुक्तवान्सूक्त स्वपादेचापदात्यजत् ।। 60 ।। पस्पर्शगात्र नेत्रान्तै. दृष्टवान् स्तोत्रमात्रत ।। $60\frac{1}{2}$ ।।

**10. शेष प्रकरण श्लोक ( 61–90 )**

कार्तकीर्ति· कृपापात्रतया हीनस्य पुत्रक ।। 61 ।। त्वमप्येवं प्रसन्नास्य प्रसन्नीकुरु त हरिम् । गुरुं मा मावमस्था: त्वं कुरु कार्य मयेरितम् ।। 62 ।। आलस्य न कुरु त्व हि पालयिष्येहमञ्जसा । कालक्षेपो न कर्तव्यः स्वालय ते भविष्यति ।। 63 ।। क्लीबोक्त्या स्वालयञ्चेति तवालस्याद्रु-

विष्यति । पालयामि बलादेव कालयाम्यपमृत्युताम् ।। 64 ।। तस्मान्साधो कुमाराश्च ह्यशुभाच्च
शुभात्मक । सभासु भास्वर वाक्य भावगर्भ तु बोत्र्य ।। 65 ।। बुद्धिमान्यव सिद्धेश श्रद्धा
कुरु बुधे मयि । बिप्रस्य तनुरेवेय मत्तनुर्नात्र संशय ।। 66 ।। अतएव त्वतो विप्र त्व कृत्या
वक्ति मत्कृतिम् । सुकृतिचास्य विप्रस्य स्वकृत्या मावयाम्यहम् ।। 67 ।। तस्माद्विप्राय
दातव्य क्षुधितायान्नमुत्तमम् । सकुटुम्बाय दारिद्रयात् क्रुद्धाय शुद्धाय च ।। 68 ।। अन्नकामाय
चरते कृशायेति श्रुतौ सुत । पश्यान्नदानमाहात्म्य मानसिद्धमनन्तकम् ।। 69 ।। शृत्यर्थ
जानतः पुत्र कुतो वक्ष्ये निरन्तरम् । मानत प्राप्त धर्म त मा त्यज त्व सुतोत्तम ।। 70 ।।
अह नमामि कामेन मानवायान्नदायच । दानवा अपि यास्यन्ते चान्नदानासुसद्गतिम् ।। 71 ।।
अन्नस्य नाम्नाचानन्तोप्यतियत्न करोति च । जीवाना जनने कोनु मानसिद्ध परित्यजेत् ।। 72 ।।
अन्नाद्भूतानि जायन्ते जाताश्चान्नेन वर्धन्ते । अद्यतेऽत्ति च भूतानि तस्मादन्न तदुच्यते ।। 73 ।।
एवमन्न निमित्तं च कृत्वा तत्तत्करोति च । अन्नतोऽपि तथान्नेन माहात्म्यं स्वस्त्र याति च ।। 74 ।।
अतो अन्नस्याविनाभावात् जीवाना जीवमानता । अन्नानि चैव जीवाना कानने वासिनामपि ।। 75 ।।
जीवमानप्रदान्येव किमु ग्रामनिवासिनाम् । अतोऽन्न सदृशो मानो जीवाना नैव विद्यते ।। 76 ।।
मयोक्तमन्नतत्व च शृणुते योऽनिश सुत । अन्नं च लभते पूर्णमनन्त चापि पश्यति ।। 77 ।।
इद कथ सन्घटते अनुपपत्तिरथात्रतु । इति मावित्त जीव त्व कत्थनं वापि मानव ।। 78 ।।
यद्येव वदसे विद्वन् मद्वन्दन विधि कुरु । क्रुद्धश्चेत् छिन्धिक्रोध त्व भिन्धि दुर्बुधि पद्धतिम् ।। 79 ।।
नोचेद्गच्छस्व दूरतु दार प्रति सदा कुरु । द्वार राज्ञा पुनर्गच्छ धीरवादमपा(थो)कुरु ।। 80 ।।
अथापि वक्ष्ये ते काम कथाक्रम विधि बुध । सुक्षीणस्त्व वृथाक्षेपो भिक्षामात्र ददस्व मे ।।
विप्रान्तर्यामिण पूर्ण पुण्यस्य तु गुणार्णव ।। 81 ।। अह विप्रमुखेनैव चान्नं भोक्ष्यामि नान्यथा ।
अनेक वैभव चापि मन्नन्दनमुखेनतु ।। 82 ।। विना नान्यत्र भोक्ष्यामि चान्नमात्रं तु तन्मुखे ।
तस्माद्विप्राय दातव्य त्रातव्यश्च सदा द्विज ।। 83 ।। साचिव्यं कुरु वाण्याच वक्तास्त्यात्सर्वएवच ।
अनेक मूर्ति सम्युक्त कीर्ति सन्तति सयुतः ।। 84 ।। प्रार्थयामि हयग्रीव स्वार्थं यास्यामि कामितम् ।
मूर्त्यैकया प्रार्थितया परैश्च स्वार्थेषु सक्तै कृतकृत्य बुद्धया । आर्तिच हृत्वा परमार्थरूप कार्त स्वराभ

हयकन्धरस्य ॥ 85 ॥ नमामि कामेन विना वदामि नामानि तस्यैव सुमानवाग्रच । ध्यायामि मायामपि कामितप्रदा त्वयामत सूक्ष्मतर हृदिस्थितम् ॥ 86 ॥ शतं शत च पद्माना प्रत्यध्याय गत कुरु । शुभश्रुतकथ त्व च भव नि सशयो भव ॥ 87 ॥ अहमेकेन रूपेण शोकं परिहरन् सदा । श्लोकान् वक्तु प्रविष्टोहं काकबुद्धौ द्विजोत्तमे ॥ 88 ॥ तथैकेनैवरूपेण मत्तोकेच प्रविश्यतु । लोकस्य दर्शनात्सद्य शोकं परिहराम्यहम् ॥ 89 ॥ देववृन्दसमायुक्तो मद्वृन्दावन सस्थित । सद्वृन्दाना प्रयच्छामिचेप्टवृन्दानि सर्वदा ॥ 90 ॥ एतत्सर्वं स्वाप्नद्येन गर्वं हित्वा सर्वे विप्रवर्यास्यजेन । श्रुत्वा चोर्व्या शर्वं गुर्वादि देवान् दृष्टवोर्वशी यान्तु मां मानवेन्द्रा. ॥ 91 ॥ इदं वृन्दावनाख्यान ये पठन्ति मनीषिण । मुकुन्दावनमेवास्तु तेषा कन्दाशनाज्ञया ॥ 92 ॥ इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात् । सम सहस्रशीर्षस्य सूक्तस्य पुरुषात्कृतम् ॥ 93 ॥ यच्छृण्वता भक्तिरुदार सद्गुणे हरौहरेर्लोकगते तथामयि । भवत्यहो सर्वशुभाप्ति सन्मती. ददात्यजस्रं सुत सत्यमेवतत् ॥ 94 ॥

ॐ इति श्री ब्राह्मणस्वाप्नवृन्दावनाख्याने अलौकिविभागे वैभवपर्वणि पञ्चमोध्याय. समाप्त ॥

॥ श्रीकृष्णार्पणमस्तु ॥

# अथ षष्ठाध्यायः

## 1. शेष प्रकरण– ( 1–49½ )

हरि ॐ ॥ तथैव नन्दने पुण्ये वने नन्दनमानित । इन्द्राण्येन्द्रेण चानन्दो मन्दाकिन्या रमाम्यहम् ॥ 1 ॥ तथापरेण रूपेण मेरौ नारायणार्चक । सुराणां शरणे रम्ये करणैर्मरणार्तिभि. ॥ 2 ॥ मुक्तोयुक्तोहरेर्भक्त्या शक्त्या सूक्त्या च शक्तिमान् । पृक्तस्तुषारैर्नेत्रोत्थैः प्राक्तृष्णा त्यक्तवानहम् ॥ 3 ॥ तत्रचैव चिर रम्ये रमारमण सारणे । कारणञ्च विनारीणा शरण यामि चारणै ॥ 4 ॥ एवं मेरौ सदारामे चाराधन परायण । नारायणस्य चरणे मरणार्ति जहामि च ॥ 5 ॥ तथैकेनैव कालेन कैलासे निर्मलाचले । सालवृक्ष शतालोले कोलादि मृगचञ्चले ॥ 6 ॥ पालिते बालरूपेण कालन कुर्वता (कुर्वता) सताम् । लोकेश पालकेनापि लालितोऽह न सशयः ॥ 7 ॥ हे नन्दन पुन. श्रीमन् ममानन्द प्रदो भव । मद्दास सङ्गीत सस्थ सत्पद्यानि सदा शृणु ॥ 8 ॥ सङ्गी-तस्यानुकूल्येन त्वङ्गीकुरु पदान्तरम् । प्रसङ्गीकुरु तस्यार्थ साङ्गीकुरु च मत्कृतिम् ॥ 9 ॥ विप्रस्य दोषेण कानिचित्पद्यानि मनासि न. । शब्दमान विरोधीनि कुर्वन्ति शृणु नन्दन ॥ 10 ॥ अथापि विप्रवर्यस्य दोषो नास्ति शृणुष्व तत् । जागृत्कृति ग्रहेवापि त्वग्रहो जायते सुत ॥ 11 ॥ स्वाप्नग्रहण शक्तौ च पश्य विप्रचमत्कृतिम् । तदपि ब्राह्मणस्यास्य मदनुग्रहतो ऽभवन् ॥ 12 ॥ सदनुग्रह माहात्म्य त्वद्हृदिस्थ सदा कुरु । अथचानुसराम्यत्र प्रकृतं पुत्र तच्छृणु ॥ 13 ॥ कृच्छ्रान्नास्ति ममैवेह तथा चापि न सशयः । अहमेकेन रूपेण स्वर्गे ऽनर्घ्ये न घर्घरम् ॥ 14 ॥ दीर्घज्ञान दिशाम्यद्धा गर्गादीना न सशयः । यमोपि कमनीय मे रूप दृष्ट्वा मनोरमम् ॥ 15 ॥ क पुमानीदृशो ऽस्माक लोक नाक त्वमागत । इत्य पृच्छत् प्रचेताश्च सुचेता अपि काश्चन ॥ 16 ॥ स्त्रियोऽप्यात्रेय मुख्याश्च कोत्र सुत्राम मानित. । तदापिकमनीय मे रूप दृष्ट्वा मनोभवम् ॥ 17 ॥ मेनेरतिः स्वभर्तार कामार्ता रूपसम्पदा । एव स्त्रियश्च सर्वास्ताः उर्वश्याद्या सुगर्विता ॥ 18 ॥ गुर्वादिष्टास्तु स्वाविष्टा. प्रहृष्टा रूपसम्पदा । वासिष्ठानथ दृष्ट्वा ता. पृष्टा कामेन तुष्टिदा. ॥ 19 ॥ अष्टाध्यायात्मक चैतत्कष्टान परिहरिष्यति । काष्ठान्ते कुर्वता ख्याति शिष्टानामिष्टद सुत ॥ 20 ॥

रामोपि तत्र मा दृष्ट्वा कामेन रहित मुनिम् । सुमनोहर मे नित्य भृत्यो भव समीपग. ॥ 21 ॥
इति मामुक्तवान् सूक्त स्वपादेचापदा त्यजत् । एव यमसभामध्ये समवर्ती सुविस्मितः ॥ 22 ॥
कुमाराभच मां दृष्ट्वा स मारोऽपि सुलज्जित । नरके परकीयाश्च सुरकार्यं विवर्जिता ॥ 23 ॥
स्वकीया अपि पाकीया प्रकीर्य मम पूजनम् । शरण मरणातीत करुणाकरमञ्जसा ॥ 24 ॥
तर्णि मोहसरणे स्फुरणं करण च मा । आगतः स्वागतोक्त्याच का गति पापिनामिह ॥ 25 ॥
इत्यपृच्छन् स्वच्छतत्व कुत्सित कर्मतत्त्यजु । क्रकचच्छेदन चापि छित्वा सर्वे दिव ययु ॥ 26 ॥
इत्येव नरकोत्तार त्रातार सर्व सज्जनान् । श्रुत्वा हित्वा तु कामार्ति नरक यान्तु मत्पदम् ॥ 27 ॥
मम स्वप्ने तव स्वप्ने चास्य स्वप्ने वदत्त्वयम् । तर्हि विप्रस्य तत्स्वप्न सत्य लोके भविष्यति ॥ 28 ॥
इत्यविश्वासत. पुत्र ये वदन्ति कुबुद्धय । तेषा शापान्प्रदास्यामि दासानामपि शाश्वतान् ॥ 29 ॥
कुतो वक्ष्ये भवत्स्वप्ने मूर्ति मायास्व पातकिन् । सुत मेऽकुमति प्रेत वृथा प्रेरितवानसि ॥ 30 ॥
श्रद्धाहीनं कुबुद्धे त्व वृद्ध त्याजितवानसि । सर्वज्ञोऽह न सन्देह कुमतिज्ञो दुरात्मनाम् ॥ 31 ॥
सुमतिज्ञ सता चापि तत्वज्ञोऽह विशेषत । सर्वत्र तव विश्वास ह्यविश्वास कुतोऽत्रतु ॥ 32 ॥
अविश्वासोत्र ते सम्यक् यदि वा तर्हि सर्वत । अविश्वासो भवत्येव तव सत्य मयोदितम् ॥ 33 ॥
विश्वासस्तत्रचेत्पुत्र ह्यविश्वासः कुतोत्रतु । सर्वे मयोक्ता श्लोकास्ते शोकमूलस्य नाशका ॥ 34 ॥
नाकवाक्यानीव पुत्र माकुरु त्व परेरित. । विप्रोऽय मम सद्बुद्ध्या शुद्धान्त करणोऽभवत् ॥ 35 ॥
श्रद्धायुक्तो मयोक्तेतु वृत्ति याञ्चना करिष्यति । यावदीश्वर दत्त वै तावतैव सुखी भवेत्
॥ 36 ॥ मत्प्रेरणाबल पश्य ब्राह्मणे पुण्य कीर्तन । कारण च ऋणान्मुक्तौ मत्कारुण्य विना नहि
॥ 37 ॥ एव कृते ह्यविश्वासे ह्यलमेतावतासुत । कृतेन मम सत्पुत्र स्वस्तितेऽस्तु कुतोऽशुभम्
॥ 38 ॥ विप्र प्राणावधिर्यावदित्युक्त पुण्य रूपिणा । कण्वादि मुनि मध्येतु शृण्वद्च मम मानसम्
॥ 39 ॥ स्वर्गागमन पर्यन्तमुत्सर्गोऽत्र न सशय. । निर्गतोद्च भवाम्यद्धा वाक्सर्गादपवादत
॥ 40 ॥ यथा गच्छन् गज शीघ्र गोक्षुराद्चपवादतः । न गच्छति पुन शीघ्र दुर्वादिगज सिह्म भो
॥ 41 ॥ तथाहमपवादेतु निवृत्तो वाग्विसर्गत । अत्रापवादक पुत्रह्यविश्वासोऽ स्मदीयक ॥ 42 ॥
तस्मान्प्रतिज्ञा हान्यादि दोषो मम न कश्चन । कदाचिदेव वक्ष्यामि कार्ये तु प्रस्तुते सति ॥ 43 ॥

इति पूर्वं मयाप्रोक्त मनुसन्थत्स्व बुद्धिमन् । ममेहत्रीणि रूपाणि शिष्टानि तुष्टानि च ॥ 44 ॥
मत्पुत्रे कृत पाण्डित्ये विप्रे वृन्दावने सदा । यथा वायुस्तवायुष्य वृद्धये वर्तते त्वयि ॥ 45 ॥ तथाह
वर्तयाम्यत्र विप्रे पुत्र न सशय । मे शुद्ध वृद्ध विप्रोऽयमतिमुग्ध स्वकार्यतः ॥ 46 ॥ क्रुद्धस्त्वं
माभवस्वाद्य श्रद्धायुक्तो बुधे मयि । सत्य वच्मि हित वच्मि सुत वच्मि पुनस्तव ॥ 47 ॥ विप्रोय
वर्तते वृत्ति कुत्र यास्यति मत्प्रिय । विधवाश्रुत तेऽद्यैव विधिश्च विमुखो भवेत् ॥ 48 ॥ द्विज
कार्यतमद्रोहात् द्विजकार्यं विरोधिनः । सुखिन सन्तु मद्भक्ताः शश्वज्जीवन्तु मत्प्रिया ॥ 49 ॥
अति सौभाग्यवन्तश्चसन्तु भक्तियुता हरौ ॥ 49½ ॥

## 2. विप्र प्रकरण श्लोक – ( 50–58 )

मम वृन्दावने पुण्ये कमनीय तु मा स्मर ॥ 50 ॥ श्रम हारिणमज्ञात्वा सुमनास्त्व न गच्छह ।
एव बुद्धौ सदा शुद्ध श्रद्धा कुरु धिया तव ॥ 51 ॥ क्रोध त्यज द्विजाद्यैव भज मा भुजगेश्वरम् ।
अहं तवाहित नैव वच्मि किञ्चन काचन ॥ 52 ॥ व्यथा ते मास्तु नास्तीति गुरुदैव वदन्ति तैः ।
मत्सुतस्य सुविश्वास पश्य त्व विप्रसत्तम ॥ 53 ॥ सीतापतेश्च भक्तस्य व्यास शेषस्य चेव हि ।
चतुर्णामपि विश्वासे स्वर्ण लाभ यथा तथा ॥ 54 ॥ कर्णश्राव्य भवत्येव वर्णात्मकमिदं वच. ।
मत्प्रेरिताः सुविश्वास कुर्वन्त्येते न सशय. ॥ 55 ॥ पश्यन्ति विश्वास फल मैहिकामुष्मिक चयत् ।
वर्णात्मकमिति प्रोक्त कर्णेन शृणु नन्दन ॥ 56 ॥ स्वर्णवर्ण शिलायां मे चीर्णेन लिखीतं कुरु ।
वर्णाना ब्राह्मणाद्याना कर्णश्राव्य तथा कुरु ॥ 57 ॥ स्वर्णलाभाय ते पुत्र शर्मणे च सदा तव ।
सत्य सत्थ पुन सत्यमुद्धृत्य भुजमुच्यते ॥ 58 ॥

## 3 वेदनिधि प्रकरणं ( 59-64½ )

शस्त शस्त कुरु क्षिप्रं विप्रस्य न मृषावचः । शीघ्रेणाहन्तु गच्छामि व्याघ्रादिभय कम्पिता ॥ 59 ॥
प्राग्र्चाथ गौर्यथारण्ये स्वाग्र्चा मूर्ति भजामि ताम् । अविश्वासेन सर्वेषा उर्व्यामत्यन्त पापिनाम्
॥ 60 ॥ तेषामाकर्षण काले यमदूतैश्च कारयन् । तस्मान्नरवर श्रेष्ठ प्रेष्ठ मे सर्वदा मठे ॥ 61 ॥

बुद्धि सौष्टव सम्युक्तान् श्रेष्ठानङ्गी कुरु स्फुटम् । इयं तव शुभा बुद्धि. कियन्तः कुजना भुवि ॥ 62 ॥ नयन्तो नरकावास स्वय तेऽपि पतन्त्यहो । कविता ब्राह्मणे नास्ति सविता वेत्ति सर्वथा ॥ 63 ॥ भविताऽथापि लोकोऽयमयुत शरदा शतम् । मयाऽङ्गीकृत विप्रोऽय प्रेत्य पुत्र सुखी भवेत् ॥ 64 ॥ कात्र हानि कृताचास्य परैर्हास्ये कृतेप्युत ॥ 64½ ॥

## 4 विप्र प्रकरण श्लोकः– ( 65-66 )

ब्राह्मणाधम मद्वाणी निर्गुणान् प्रति माभण ॥ 65 ॥ गुणिना भण सद्वाणी नोचेत्प्राणान् वृणोमि ते । काण काण गुणैर्हीनोप्यण्वीकुरु कुमानवम् ॥ 66 ॥

## 5 वेदनिधि प्रकरण – ( 67–101 )

मत्सन्निधाने सति नन्दनाग्र्च वृन्दावने सुन्दरमन्दराभे । वृन्दारकेन्द्रै सहचेन्द्रियेशो वीन्द्रादिदेवै. सहसन्निधत्ते ॥ 67 ॥ मयि गच्छति सत्पुत्र देवै सह मुनीश्वरै. । परिगच्छति स्वच्छन्दोप्यनेकात्म सुमूर्तिभि. ॥ 68 ॥ अन्वय व्यतिरेकानु विधायित्वेन तस्य मे । कस्यचेदृश माहात्म्य पश्य लोके सुचक्षुषा ॥ 69 ॥ तस्माद्विश्वासत पुत्र यास्यन्त स्थापयाशुतम् । सेश्वरं भास्वर मूर्ति कार्तस्वर समाकृतिम् ॥ 70 ॥ अविश्वासे प्रयास्यामि सुविश्वासे वसाम्यहम् । तव श्वासप्रणेताह भविष्यामि न सशयः ॥ 71 ॥ तस्मादायुष्य वृध्यै ते शुद्ध विश्वास सस्थितिम् । कुरु श्रद्धायुतो नित्य कोऽद्धावक्ता च मा विना ॥ 72 ॥ सहोदर च हित्वापि कविः स्यां त्वन्मुखे सदा । एतच्छ्रुत्वा रहस्य मे परस्य सुयशस्विनः ॥ 73 ॥ विप्रस्य शश्वदुक्त्याच विश्वास कुरुमत्कृतौ । दर्वीकरो गर्वितोऽपि गरवीर्येण गारुडै. ॥ 74 ॥ गा गतोऽपि न गन्ता च स्वांगतिं सौगतो यथा । तथैव तव विश्वास विश्वस्त प्रस्तुता गतिम् ॥ 75 ॥ हित्वाशस्ता स्थिति प्राप्य त्वत्कृता सम्स्थितोऽभवं । तवादराख्य रोधेन प्रतिरुद्धो भवामि च ॥ 76 ॥ त्वदाराधित पादाब्ज सुधा सागरगो यथा । अभव शुभमेव त्वमभय चापि मद्भव ॥ 77 ॥ लभ मे भव सम्प्रीति भाजो भव्य भवेषुच । इत पर परैरुक्ता रिक्ता विश्वासत कृतौ ॥ 78 ॥ न्यत्कृता तर्किता सद्भि. स्वीकृता न कुरु प्रिय । काकोदरो यथा लोके तोकोदर प्रपूरणम् ॥ 79 ॥ भेकोदरगतान्त्रैर्वल्मीकोदर गतोऽपि सन् ।

कुरुते निरतस्तच्च स्मरते हरते नरै. । हरन् तु त्वरते रन्तु पुरते क्रियते च सः ॥ 80 ॥ तद्वत्खलोऽपि मलभाण्डमजाण्डकोशे स्वस्योदर तु तरते परपीडनाच्च । नित्यं कलत्ररतिमान् भवतीह पुत्र प्राणान्परस्य हरते नरके चरिष्यन् ॥ 81 ॥ अप्राकृत प्रवक्ष्यामि विप्रान्तर मुखेन च । सुप्राकृत मनेनैव सम्प्रार्थय सुताशुमाम् ॥ 82 ॥ शिष्टानि तुष्टानि चेति वर्णन्यूनत्वतः सुत । सन्निधानस्य न्यूनत्व क्रमाज्जानीहि मानव ॥ 83 ॥ वृन्दावने यादृश तु तादृश नास्ति नन्दने । नन्दने यादृश धीमन् तादृश नास्ति ब्राह्मणे ॥ 84 ॥ अधिष्ठानस्य माहात्म्य दातु वृन्दावने सदा ॥ वृन्दारकेन्द्र सन्दिष्टो मन्दस्मित वसाम्यहम् ॥ 85 ॥ त्वयि सच्छास्त्र वक्ताच व्यक्त व्यक्तिमता वर । त्यक्त्वा सर्वाणि कृत्यानिभृत्यान्नग्रहकातरः ॥ 86 ॥ वसामि मनसा श्रीमन् दासो व्यासस्य शासनात् । श्वासरूपेण चावासः श्रीशस्यापि भवाशुच ॥ 87 ॥ शास्त्रार्थज्ञ कृतार्थ मा त्राता त्व सर्वदात्र तु । कुबेरोप्यथमा दृष्ट्वा सभेरीश्व आदरात् ॥ 88 ॥ गम्भीर स्तोत्र सन्नाद सुभीरु सन्नुपागत. । गृह्णन् पाणि गुणिन् धीमन् मणिकीर्णानि मानव ॥ 89 ॥ ददौचाभरणान्याशु चरणे मणिराशिकम् । स्वग्रह वेशयामास सगृह्णन्नेव मे करम् ॥ 90 ॥ प्रगृहीतमति प्रेम्णा जगृहे मम पादुके । कुबेरस्त्वथ मा दृष्ट्वा सुवीरोऽपि सुविस्मित ॥ 91 ॥ त्रयी विरोधिन हत्वा कवीश्वरमुपागतम् । यथा करोति वेदस्य निर्भय भारतीपति ॥ 92 ॥ तथा करोषि लोकेश प्रीति साधितवानसि । इति मामुक्तवान् भक्त्या मत्कृतिस्मृति मात्रत. ॥ 93 ॥ त्यक्तवान् सर्वकृत्यानि श्रुत्वा तत्वानि मे सुत । अह निमिषमात्रेणानिमिषै सहितोऽगमम् ॥ 94 ॥ पश्यतामेव सर्वेषा पाशिनो लोकमागत । प्रचेता अपि मा दृष्ट्वा सुचेताश्च विपश्चितम् ॥ 95 ॥ कुचेताश्चागत पश्चात् स्वच्छ याचितवान्मया । ज्ञान भानुनिभ मौनिन् मानेन सहित शनै ॥ 96 ॥ अनन्तानन्तमाहात्म्य सूचन लोचन यथा । काञ्चनेनाञ्चनं कुर्वन् मा छत्रं पापिनामिह ॥ 97 ॥ लाञ्छनै. प्राञ्चित जानन् वाञ्छित चाप्तवान्मया । तदादरेण सर्वेऽपि गर्विता अपि चर्वितम् ॥ 98 ॥ दर्वीकर पति पर्वण्याप्ता स्वर्वासिनश्च ये । साधुसाध्विति सम्भाष्य जगृहुर्दर्शन च मे ॥ 99 ॥ स्वादु स्वादु पदैर्दिव्यै र्मधुरोक्ति समन्वितै. । एव ज्ञानोपदेश च मानवान्तक सन्निधौ ॥ दानवा अपि तच्छ्रुत्वा स्तुवन्तो मां दिव ययु ॥ 100 ॥ एतत्सर्वं स्वाप्नपद्येन गर्व हित्वा सर्वे विप्र-

वर्यास्यजेन । श्रुत्वा चोर्व्या शर्व गुर्वादि देवान् दृष्ट्वोर्वशी यान्तु मा मानवेन्द्राः ॥ 101 ॥
इद वृन्दावनाख्यान ये पठन्ति मनीषिण । मुकुन्दावनमेवास्तु तेषा कन्दाशनाज्ञया ॥ 102 ॥
इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात् । सम सहस्रशीर्षस्य सूक्तस्य पुरुषात्कृतम् ॥ 103 ॥
यच्छृण्वता भक्तिरुदार सद्गुणे हरौहरेर्लोकगते तथामयि । भवत्यहो सर्वशुभाप्ति सन्मतीः
ददात्यजस्र सुत सत्यमेवतत् ॥ 104 ॥

ॐ इति श्री ब्राह्मणस्वाप्नवृन्दावनाख्याने अलौकिविभागे वैभवपर्वणि षष्ठोऽध्यायः समाप्त ॥

॥ श्रीकृष्णार्पणमस्तु ॥

# अथ सप्तमाध्यायः

**1. वेदनिधि प्रकरण– ( 1–44 )**

हरिः ओ ॥ एव वै देवतालोके पाकशासन पूर्वकान् । दृष्ट्वा चाकाशगामीतु सत्यलोकमितोऽगमम्
॥ 1 ॥ तत्रैव निवसाम्यद्धा शुद्धान्तःकरण. सदा । बद्ध्वा हयग्रीवपद श्रद्धायुक्तश्च सुस्थिर
॥ 2 ॥ तत्रापि मा हयग्रीव श्रुत्यर्थ सर्वमेव च । ग्राहयामास सर्वज्ञो वर्गे वर्गार्थतत्ववित् ॥ 3 ॥
" सर्गे सर्गे तथाह वै स्वर्ग यास्यामि मार्गयन् । घर्घरौ तौ च दैत्याग्री मधुकैटभ सज्ञितौ ॥ 4 ॥
तौ हत्वा सलिले काले लोकं निर्मितवानलम् । पालयामि कुलालोऽपि कलश पालयन्यथा ॥ 5 ॥
एव सृष्ट्याद्यष्टकं च स्पष्ट कष्टं विनाप्यहम् । श्रेष्ठ सुष्टुकरोमीष्टा भक्ताना प्रेष्ठ सद्गतिम्" ॥ 6 ॥
इति मामुक्तवान्भक्त त्यक्त्वा सर्व तु पातकम् । प्राप्त पदान्तिक स्वस्य शक्त्यायुक्त श्रुतिग्रहे ॥ 7 ॥
सहस्रपद्य तत्पद्म तत्पदाख्य दलान्वितम् । तद्भाव सौरभ भुवं जिघ्रन् बिभ्रत्स्वमूर्धनि (बिभ्रतुमूर्धनि)
॥ 8 ॥ विप्रास्य सरसोद्भूतं तरसा सर्व भूसुराः । शिरसा स्वरसोपेता· श्रियैतामरस परम् ॥ 9 ॥
धारयन्तु बुधागारे धारयन्तु सदारकाः । आदरै पादरजसा धूतपापाश्च येऽनरा ॥ 10 ॥ इत्थ
ममोक्तिरेवेय कथ कृत्रिम वार्तया । व्यर्थता याति तत्वज्ञ पार्थिवेष्वपि सार्थिका ॥ 11 ॥
अतिगोप्यानि पद्यानि मयोक्तान्यपि कानिचित् । जनस्यायोग्यता दृष्ट्वा हृतवान् विप्रवाक्यत
॥ 12 ॥ अहं त्व विश्वासमेव भाविन भावनात्मक । भावयन् भानुमद्धीमन् अबुधानां हरामि च
॥ 13 ॥ एव नित्य प्रनृत्यन्वै सत्य कर्तुं मयोदितम् । तत्तन्मुखे प्रयत्नानि वक्तु तथ्य करोमि च
॥ 14 ॥ अह धवलगङ्गाया देवै. सह मुनीश्वरै । अरुणोदय वेळाया स्नात्वा गच्छामि नित्यश
॥ 15 ॥ नराणां दर्शनं चापि स्पर्शन च विमर्शनम् । सुराणा नैव धर्मश्च संभाषणमपि प्रिय ॥ 16 ॥
स्वप्नेपि चाप्तवान् श्रीमन् आयुष्मन्नरदेहिनम् । प्राप्नोति यदि वा ताप नरकेचाप्नुयाद्ध्रुवम् ॥ 17 ॥
अथापि मे न दोष स्यान्नि सग वपुषो ऋषे । अघमर्षणतो दोष शोषयामि तदप्यहम् ॥ 18 ॥
तस्माद्धवलगङ्गायामङ्गीकृत्य मुनीश्वर । सङ्गीकृतावगाह सन् स्वाङ्ग यास्यामि नित्यश.
॥ 19 ॥ अथ ते वच्मि सत्य च प्रश्न मा कुरु मा प्रति । शिश्नोदर पराणाच वाच न शृणु नन्दन

॥ 20 ॥ शोषये स्मृतिमात्रेण दोषं सर्वविपश्चिताम् । हयास्य कृपया नित्य नयास्य चरणार्चनात्
॥ 21 ॥ प्रियास्यैव गति. प्राप्ता प्रयास्यामि न ससृतिम् । हे पुत्र वृत्रहन्ताय विचित्र कृतवानहो
॥ 22 ॥ पित्राद् (दि) ष्टश्च स्वच्छत्र धृतवानत्रमूर्धनि । धन्वन्तरि भजे नित्य मन्वन्तरपतिं प्रभु
॥ 23 ॥ तन्वन्तरगतश्चाह नन्वन्तर गतोऽपि सन् । अमृताशुगत देव त्वमृताब्धि समुद्भवम्
॥ 24 ॥ अमृत पाययन्त मा अमृताक्त कमण्डलुम् । सदेवो वरदो मह्य तदैव प्रभुरव्ययः ॥ 25 ॥
ददौच दिव्य विज्ञान मुदैव मम सेवया । " श्रीपतिश्चोत्तमो नित्य सत्य जगति तत्कृतम् ॥ 26 ॥
कत्थन तच्चमिथ्येति जल्पन्ति दितिजाः सुत । पूर्व सुरासुरगणैरर्थितोऽह कथान्तरे ॥ 27 ॥
तथान्तरे पपुर्देवास्त्वमृतं चेतरेमृति । युद्धे देवै. सुसन्नद्धा विद्धा वृद्धविरोधिन. ॥ 28 ॥
मुग्धा. सद्भावतो दुग्ध पयोधौ मध्यगाश्च ते । तद्द्वेषाद्द्वेषरूपास्ते मृषेति मम भाषितम् ॥ 29 ॥
भाषन्ते शेषशायि च दोषीति सुषिरोक्तिभि । इति मामुक्तवान् सूक्त स्वपादेचा वदत्यजत् ॥ 30 ॥
का पद्मान्तक दैत्यानामन्तक चापि त भज । अनन्तं त नतोस्मीश देशतः कालतश्च य ॥ 31 ॥
गुणतश्च वदन्तो ये सन्त. कान्तं श्रिय सुत । वैद्यो धन्वन्तरिश्चाय वैद्यशापाख्यरोगहा ॥ 32 ॥
चोद्य च कृतवान् मह्य चार्यंतौ हृतवान्मम । भैषज्यं कृतवान्मह्यं वैषम्यरहितः प्रभु ॥ 33 ॥
भैष्म्या (भैष्मी) पति प्रसादाख्य प्रेष्यस्य स महाभिषक् । एव ज्ञानामृत श्रीमन्नानृतं चोच्यते मया
॥ 34 ॥ कोमृति नानुयातीह मामृते त वदस्व मे । हयग्रीव प्रसादेन शुभमेव ग्रसिष्यसि ॥ 35 ॥
भवग्राहाद्भय नास्ति शुभग्रह निरीक्षया । मत्प्रसादेन पुत्रेश सुप्रसङ्गी भविष्यसि ॥ 36 ॥
कुप्रसङ्ग निराकृत्य सुप्रभाते प्रियो भव । नित्य वच्मि शुचि प्राञ्चं कच गृह्य वचो मम ॥ 37 ॥
विचक्षणं विचार्याहमाचार्य प्राक्चतुर्विधम् । तत्व तत्वविदा श्रेष्ठ मत्वा तन्मतमव्ययम् ॥ 38 ॥
कृत्वाकृत्वाहमत्यन्त सुखी भव शमिन् सदा । वसामि नित्य श्रीशस्य सभायां सारवत्तया ॥ 39 ॥
व्यासात् पाराशरात् सारतत्वानि स्मारितोऽभवम् । बदरीपुर वासेतु मदिरा पानत सुत ॥ 40 ॥
कदरीकृत चारित्रान् विददार हरि. स्वयम् । नरनारायणात्पुण्यं शृणोमि मुनिमण्डले ॥ 41 ॥
स्मरणात् सर्वपापघ्नात् करण मुक्तिपद्धते. । व्यासोऽपि दासाय विशाल बुद्धे. शशास मह्य जगदीश
दास्यम् । सदा हयास्य समुपास्य श्रीशं सेशं सशेषं जगदासदासम् ॥ 42 ॥ विरिञ्चपूर्व कविरञ्जितं

हरिं स्वरञ्जित मौनिजनै रथाञ्चितम् । स्मर जयत्व स्मर मार ख जनि यद्रञ्जितं त्वद्धृदयं निरञ्जनम् ॥ 43 ॥ इति मामुक्तवान्व्यासो दास भासुर विग्रह । मन्दहासान्वितो नित्य इन्दिरे-शोपि मा तदा ॥ 44 ॥

## 2 विप्र प्रकरण (45–81)

सुषिरोक्तिभिरित्युक्ते कषणोक्तित इत्यहो । भाषसे भेषज किं ते जिह्वाया अपि तद्वद ॥ 45 ॥ वातपित्तादि दोषाणा मेलने सति कालत । बालकान्सति मित्रादीन्प्रति कालयते यथा ॥ 46 ॥ तथा वदस्यन्यथा त्व कथा वक्ष्ये हरे रथो । तत्कथा मत्कथायुक्त सर्वथा मावृथा भवेत् ॥ 47 ॥ सैवते भेषज भाषा प्रेरयिष्यति नान्यथा । निर्दोषाणा मृषावाणी न भविष्यति सर्वथा । तस्माद्वक्ष्ये कथा तथ्या प्रथितान्वय सभव ॥ 48 ॥ तिथौ तिथौ माकृथास्त्व व्यथा तात वृथा वृथा । तथा तथा भवत्येव हरि कर्ता यथा यथा ॥ 49 ॥ हरेराज्ञा पुरस्कृत्य स विधिर्वर्तते विधौ । हरश्च हरते सर्व स्वय चास्य स्थितौ तथा ॥ 50 ॥ गर्व हित्वा तु गुर्वर्थ गीर्वाणा सर्व एव च । गन्धर्वा अपि गान्धर्वशौण्डा पण्डितमानिनः ॥ 51 ॥ हरि ययुर्मुरारि तच्चरण परमादरात् । सुरास्ते किङ्करवराः शरण प्रापुरञ्जसा ॥ 52 ॥ करदा वरदायाथ स्मरदाश्रयदायच । परदारपरान् देव विदारय क्रुधा रिपून् ॥ 53 ॥ विदारया सिधारया सुधारस मुदीरय । उदार सादरं धारा पदार विन्दजाम्भर ॥ 54 ॥ इत्यूचु सो चिर वाक्य श्रुत्युक्त प्राक्तन च ते । यौक्तिकं शौक्तिरुप्यत्व मत चातात्विक जगु ॥ 55 ॥ इति सप्रार्थितस्य भक्त्याऽकृत्रिमयासुत । कृत्य तत्कृतवानत्र चित्र हरि कृत बत ॥ 56 ॥ पारम्पर्येण राजत्व तदीयाना मदीरितम् । अतश्चिरेति धैर्यार्थ पूर्व मे वागुदीरिता ॥ 57 ॥ तत्वज्ञाना मुनीशान शासन न विनाप्यनु । शनैर्मद्वचन जानन् धीमन् मद्वचन शृणु ॥ 58 ॥ अह पूर्वेऽपि सर्वज्ञो गुर्वाज्ञा त्वमगर्वित । शिरसा धारय प्रार्थ्यामीश्वरज्ञोति शीघ्रत ॥ 59 ॥ परदारेति पूर्वोक्ता. गरदा स्वपतौ च या. । विददार हरि सर्वा असिधारा-भिरेव ता. ॥ 60 ॥ तत्पर सहरि स्वैर गर खड्गात् न्यकृन्तत । वरद परदेशस्थे स्मरदाश्रयद स्वयम् ॥ 61 ॥ रामो राजीव नेत्रोसौ रावणावरजे यथा । करदा वरदायाथ स्मरदाश्रयदाय च

॥ 62 ॥ इति पूर्वं मया प्रोक्तमनुसन्धत्स्व बुद्धिमन् । वादिराजाग्रतः क्षुद्रराजकार्यं कुत सुत
॥ 63 ॥ वादीभमृगराजोह वादिराजो हरिं भजे । इत्यपि स्वोक्तमेवात्र ह्यनुसन्धेयमन्वहम्
॥ 64 ॥ इति सर्वज्ञता शान्त स्वान्तस्थ कुरुचान्तकम् । मा तान सन्तत त्व च चिन्तयित्वा निकृन्तय
॥ 65 ॥ तस्यापि स्वोक्त दाढर्चार्थ स्वप्ने वक्ति रघूत्तम । कात्र शङ्कापि ते मास्तु शास्त्रज्ञ मम सत्कृतौ ॥ 66 ॥ उदार सादर धरा पदारविन्दजाम्भर । हृदादरान्मदीरित हृदिस्थित सदा कुरु ॥ 67 ॥ इत्यह प्रार्थयाम्यद्धा बुद्धि सिद्धेश्वर हरिम् । प्रवृद्ध ज्ञान सशुद्ध समिद्धाग्निरिव ज्वलन् ॥ 68 ॥ अतस्तदीरित वाक्यमैहिकामुष्मिकं च यत् । त्वत्स्वीकुरु गुरूक्त चेत्यतो भवति ते शुभम् ॥ 69 ॥ तथैव शेषमुद्दिश्य यद्वाक्य च मदीरितम् । विश्वासे सति तद्वैस्यात् नस्याद्वा तदभावत ॥ 70 ॥ विश्वासिनामवश्य तु तद्वैस्यात्पश्य शोभनम् । स्वस्याविश्वासत शान्त नस्याद्वा कस्य दोषिता ॥ 71 ॥ विश्वासिना समाजे च न पश्यामि हि तादृशम् । यादृश व्यास भक्तेशं तथा सीतापतेर्मतम् ॥ 72 ॥ तयो र्विश्वसतो र्वीशाधीश श्रीशोत्र शोभनम् । दास्यत्यसशय पश्य मत्प्रसादात् स विश्वकृत् ॥ 73 ॥ गुरु प्रसादत. कस्य फल न स्यादवश्यतः । करिष्यत्येव त त्स्वामी मत्प्रसादानुसारत. ॥ 74 ॥ प्रसाद मत्प्रसादेन प्रसाद स करिष्यति । क प्रसादमृते तस्य प्रसीदति न सीदति ॥ 75 ॥ तस्माद्गुरौ सदा धीर रति कुरु हरौ प्रिय । गुरुद्वारा प्रसन्नः सन् भरति त्वा रमापति ॥ 76 ॥ शुद्धसद्धर्मसिद्धाना पद्धतिं बुद्धिमान्कुरु । क्रुद्धो मद्धर्मरुद्धाना पद्धतौ ; स्तब्धता कुरु ॥ 77 ॥ सिद्धमद्धर्म पद्धत्या श्रद्धावान्मधुसूदनम् । आराधय बुधाराध्य विबुधेश्वर बुद्धिगम् ॥ 78 ॥ मधु क्रुद्ध नु धीमान् यो गदाधाराहत व्यधात् । अर्चिमर्गेण गत्वाह स्वर्चित. सर्वदैवतै ॥ 79 ॥ चर्चितश्चन्दनै दिव्यै र्नार्च्छेन्मा कोटि सद्गुणम् । ईश्वरस्य प्रसादेन सेश्वर जगदद्च मे ॥ 80 ॥ प्राश्रितचास शास्त्रेश मात्रास. सर्वथा तव । तमीश्वर भास्वर सूर्य शौर्यंद ममेश्वर सर्वं जगच्चसेश्वरम् । मुनीश्वरैः सर्व सुरेश्वरेश्वरै वशेकर सर्वं महेश्वर स्मरे ॥ 81 ॥

## 3. वेदनिधि प्रकरणं ( 82-95 )

अनन्तासन पर्यन्तमनन्त पद सञ्चरन् । अनन्तशयन दृष्ट्वा ह्यनन्त सुखमन्वहम् ॥ 82 ॥ अनुभोक्ष्ये

शनैर्वक्ष्ये मुने लक्ष्यं मन. क्षतिम् । तनुक्षतिं न वक्ष्येऽहं वक्ष्ये ननु मनः क्षतिम् ॥ 83 ॥ तनुक्षति क्षमेनित्य क्षमे नाहं मन क्षतिम् । दक्षान्मन क्षति त्र्यक्ष क्षमते कि विचक्षण ॥ 84 ॥ मन्मनो वेदना सद्य. पद्यैर्वक्ष्येऽत्र नन्दन' । त्वदग्रतो बुधाग्र्यस्त्व कुरुशीघ्रं तदग्रत ॥ 85 ॥ अध्यायान् गुरु पद्याना स्वाध्यायान्न विनाप्यनु श्रद्धावान्नैव क्रुद्धोहं वृद्धमङ्गीकुरु प्रिय ॥ 86 ॥ शिलास्था कुरु शीलाढ्य सालप्राशोऽमला कृतिम् । लोकेश पालयेऽसद्य त्वा बालं काल कालत ॥ 87 ॥ एतद्दु खेन मे सर्व सुख मे पारलौकिकम् । विषमिश्रामृत यद्वत् तद्वदेव भवत्यहो ॥ 88 ॥ एतत्कार्यत्रय शिष्टमिष्ट कुरु यथेष्टतः । स्पष्ट मे मनसस्तुष्टि शिष्ट साधय साधु भो ॥ 89 ॥ इतः पर न वक्ष्यामि कुतो वक्ष्ये निरन्तरम् । सुतान्तर न पश्यामि मत मे साधकत्वलम् ॥ 90 ॥ हे पुत्र शास्त्र वक्ताह स्तोत्र कुरु ममात्रतु । हे मित्र पात्रभूतोय कात्र शङ्कातु कृत्रिमा ॥ 91 ॥ अन्यथा पर सौख्य मे दु खा सभिन्नमेव हि । कोऽन्यथावक्ति तत्वज्ञ मन्मतज्ञ वृथाज्ञता ॥ 92 ॥ ब्रह्माण्ड समभाण्डै में माण्डव्यमुनि पाचितम् । शाण्डिल्य शौण्डित चान्न कौण्डिन्य परिवेषितम् ॥ 93 ॥ चतुर्विरचित तच्च चतुर्मुख सुर्चावितैः । चतुर्वेदोदितार्थैश्च चतुराश्रम वर्तितः (भिः) ॥ 94 ॥ उपेन्द्रेण सहप्रेम्णा ह्युपते गा इवाकरम् । उपभोक्ष्ये ह्युपेक्षातु ह्युपभोक्तृषु नास्ति मे ॥ 95 ॥

## 4 विप्र प्रकरणं ( 96–101 )

मम भोजन सन्तोष सुजनाम्बुज भास्करम् । कुजनाम्बुज सकोच द्विजराज ममात्मजम् ॥ 96 ॥ वदन्त द्विज ते कल्प भुज मज्जनता प्रति । मदजाड्य रुजाहीन द्विजाराध्य भजा (जो) द्यतम् ॥ 97 ॥ मम भोजन सन्तोष ये शृण्वन्ति मुनीश्वर । तेषामन्नानि सम्पूर्णानीति सत्या फल श्रुति ॥ 98 ॥ मम भोजन सन्तोष ये च शृण्वन्ति नित्यश । तेषामप्यनिश विप्र सह भोजनमेव च ॥ 99 ॥ इत्येक श्लोकमेकेच न वदन्ति मुनीश्वरा । पाकशासन लोके च को न वक्ता च नाकिषु ॥ 100 ॥ तेन ते भविता तोषो दोषोऽपि तदनादरात् । मदनादरतो यद्वत् द्विज तोपय याजय ॥ 101 ॥

## 5 वेदनिधि प्रकरण श्लोक – ( –101 द्विज तोषय इत्यारभ्य –110 )

कुरु कार्यं त्रय शिष्ट परलोक सुख हरम् । अन्यथैतच्चिन्तयामि कान्त कातरता भवेत् ॥ 102 ॥ स्वान्तरस्था कुरुश्रान्ति मा तारय सुकार्यत. ॥ 103 ॥ एतत्कार्यं त्रय पुत्र शत्रु हास्याभिमन्त्रितम् । चित्र गुरूक्तमप्यत्र पुत्रेण न कृतत्विति ॥ 104 ॥ यादृशोह गुरुर्धीर तादृश शिष्यएवच । इति मे हत दैतेया हास्य कुर्वन्ति नित्यशः ॥ 105 ॥ तस्मात्कुरु गुरूक्त ते मनसा स्मर धीर भो । कार्यत्रय त्रिकालेऽपि कदा कुर्यां तदीरितम् ॥ 106 ॥ सत्य सत्य पुन. सत्य विप्रोक्तिर्नैवमेकृतिः । सत्य सत्यं पुनस्तथ्यमेतत्कार्यत्रय सुत ॥ 107 ॥ तत्पाद कमल फुल्ल मद्गले बध्यतेऽमल । उपलस्थल पर्यन्त मम निर्मल सत्कृतेः ॥ 108 ॥ अध्यायकृति पर्यन्त स्वाध्याय कुरु मद्गतम् । बुध्द्यारोहय मद्वार्य वृद्ध विप्रमति प्रियम् ॥ 109 ॥ एतत्कार्यं त्रयस्यापि सुनिष्कृत्यर्थमेवच । प्रत्यय कुरु पुत्रेह मत्प्रिय विप्रसाक्षिकम् ॥ 110 ॥

## 6 सीतापति प्रकरण – ( 111–112 )

हे सीतापति भक्तेश हातोक प्रति मे वद । होमेवा जुह्व मद्वाक्य हूहूगन्धर्व गानगम् ॥ 111 ॥ कार्यत्रय नष्टमासीत् षष्ठिकाल व्रत चरे । ममेष्ट सिद्धिपर्यन्त कष्ट त्याजय भोजहे ॥ 112 ॥

## 7 वेदनिधि प्रकरण ( 113-127 )

हे पुत्र तवचाप्तिश्चेच्छ्रुत्वा सीतापतेर्वचः । कार्यत्रय शात्रवाणा नैवहास्याश्रय कुरु ॥ 113 ॥ पञ्चवृन्दावने पुण्ये पुराण पञ्चलक्षणम् । पञ्चास्य वाक्य सन्दिष्ट त्वच कारय भूरिशः ॥ 114 ॥ निर्विघ्नत कुरु त्वच ह्यविघ्न त्वग्निसन्निभम् । समारग्लानि भग्नाना तद्रुजा रुग्णकर्मणाम् ॥ 115 ॥ अह निमिषमात्रेणानिमिषै. सह नैमिषे । मनुष्य लोकमायुष्मन् मनीशामि मुनीश्वर ॥ 116 ॥ नैमिषारण्यगस्यापि नो विषादस्त्वभून्मम । मनीषिणा मत वक्ष्ये सर्वं तव शृणोषि चेत् ॥ 117 ॥ मनीषिणा मन स्थं च भणेऽद्य शृणुनन्दन । गुणिनाऽपि स्वपुत्रेण मुनीनां स्वामिनस्तव ॥ 118 ॥ कृत्य नकृतमप्यत्र चित्र हरिकृतं बत । इति पृच्छन्ति मां नित्य सत्यं सत्यं मयोदितम् ॥ 119 ॥

मुनयो नैमिषारण्य वासिनोऽपि निराशिन । मयि सन्मानिनो नित्य मुने तानपि तोषय ।। 120 ।।
त्रिभि. पुत्रस्य पुत्रत्व वित्त श्रुत्युक्तमेवच । कृत्यत्रय त्वमप्यत्र कृत्वा पुत्रत्वमाप्नुहि ।। 121 ।।
पुदित्याहुः पूयशोणादि भाज व्याजान्मया नोच्यते चात्मजाद्य । तस्मात्त्राता पुत्र इत्येव चात्र य
कथ्यते सोऽपि त्वमेव नान्य ।। 122 ।। इत्येव पुत्रशब्दार्थ स्त्वय्येवास्ति सुपुत्रक । ततः कृत्यत्रय
मित्र कुरु चित्र न च त्वयि ।। 123 ।। तस्मात्कृत्यत्रय पुत्र कुरु मित्र ममात्रतु । पुत्रशत्रोऽ
सुमित्रस्य माऽत्र ते संशयो भवेत् ।। 124 ।। मम सन्तोषणार्थ च मुनीना तोषणाय च । तव
पुण्यार्थमप्यत्र कुरुष्व निपुणाद्य तत् ।। 125 ।। एव चेदहमेवात्र पिता तव न संशय. । त्वमेव
मम पुत्रश्च नान्य कश्चन विद्यते ।। 126 ।। तुङ्गभद्रानदी तीरे गङ्गास्नान परायण. ।
रङ्गनाथ प्रियार्थ च साङ्ग कुर्यां तपस्त्वहो ।। 127 ।। तुङ्भद्रा नदी गत्वा गङ्गा सङ्गा
त्सुपुण्यदाम् । अङ्गनासेवितः स्वाङ्गैः साङ्गं कुर्यां तपस्त्वहो ।। 128 ।। एतत्सर्व स्वाप्न पद्येन
गर्व हित्वा सर्वे विप्रवर्यास्यजेन । श्रुत्वा चोर्व्यां शर्वगुर्वादि देवान् दृष्ट्वोर्वशी यान्तु मा मानवेन्द्रा·
।। 129 ।। इद वृन्दावनाख्यान ये पठन्ति मनीषिण । मुकुन्दावनमेवास्तु तेषा कन्दाशनाज्ञया
।। 130 ।। इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात् । सम सहस्रशीर्षस्य सूक्तस्य पुरुषात्कृतम्
।। 131 ।। यच्छृण्वता भक्तिरुदार सद्गुणे हरौहरेर्लोकगते तथा मयि । भवत्यहो सर्वशुभाप्ति
सन्मती. ददात्यजस्र सुत सत्यमेवतत् ।। 132 ।।

ॐ इति श्री ब्राह्मणस्वाप्नवृन्दावनाख्याने वैभवपर्वणि सप्तमाध्याय समाप्त. ।।

।। श्रीकृष्णार्पणमस्तु ।।

# अथ अष्टमाध्यायः



**1. विप्र प्रकरणं –** ( 1–35½ )

हरि. ओ ॥ तुङ्गभद्रा नदीतीरे गङ्गा सङ्गात् सुपुण्यदे । मङ्गलार्थं पितृणा च स्वां गा द्वादश निष्कदाम् ॥ 1 ॥ दत्तवान् वित्तपूर्व मे मत्तोपि स्वहितोऽपि च । तृप्त्यर्थ तातपूर्वेषां पितृणा नात्र संशय· ॥ 2 ॥ भद्रानद्याश्च तीरेऽपि पितृणा श्राद्धतद्दिने । सुभद्रावाप्ति सिध्यर्थ धाता पूर्वं ददावथ ॥ 3 ॥ इतिमन्त्रत्रय विप्र कुतो न लिखित त्वया । तव हस्तस्य पातोय दत्तापहरतो भवेत् ॥ 4 ॥ दत्तवानहमेवेष्ट तत्पितृणा त्रिविष्टपे । कष्टं नायात्यविस्पष्ट षष्ठि वर्ष सहस्त्रकम् ॥ 5 ॥ होमे वा जुह्व मद्वाक्यमित्युक्ते तवजिह्वया । दहेति चोच्यते हा हा किं ते जिह्वा दहेत्यहो ॥ 6 ॥ अश्लील भाषा मातेयमवाल विषयेऽमल । शीलाढ्यतु कुलाढ्य प्रत्यश्लीलोक्ति नं चोदिता ॥ 7 ॥ सावधानमना. श्रीमन् श्रवणे भव सद्गुणे । भवने भव मे नित्य तव नैवास्त्यसन्मति ॥ 8 ॥ हिमवत्पर्वत गत्वा सुमहत्पर्वणि स्फुटम् । अगम पर्वतस्योर्ध्वमनमत्पर्वतोपिमा ॥ 9 ॥ तद्धस्तोपरि मद्धस्तमधिरोप्यादरेण च । ऋद्धिमद्धिमवद्गेह मारुह बृहदुन्नतम् ॥ 10 ॥ तेनसपूजितश्चाह मेनका सयुतेनच । मानितो बहुमानैश्च कामेन रहितोप्यह ॥ 11 ॥ रत्नकोटिभिराटोप युक्तैश्च तटिदम्बरे । यथा स्फुट मेघसङ्घ घटिता धूर्जटेर्मतै ॥ 12 ॥ अभिषेक सुषेणाग्र्य कृतवान् दोषवर्जिते । अपि मेष गतेपूष्णि शेषशायि प्रियै सह ॥ 13 ॥ मत्प्रसादापन्न रत्न निचयान् सुचरित्रिषु । अददा मदनावेश रहितेषु मुनिष्वहम् ॥ 14 ॥ इत्यादि कृत सत्कारै रतिपूज्योहमेव तै । हिमवत्पर्वताद्यैश्च सुमते शृणु वैभवम् ॥ 15 ॥ ममाभिषेकस्य महोत्सव तु ये दोषयुक्ताश्च विशेषतोऽपि । श्रुत्वाच तद्दोषलय प्रयान्ति निर्दोषभूताच न मे मृषावाक् ॥ 16 ॥ हिमवच्छिखरादूर्ध्व स्वर्गमारुह मार्यज । घर्घरा ध्वानगा सर्वे मुनयो मार्गयन्ति मा ॥ 17 ॥ त्रिविष्टपादहं यास्ये विष्टरश्रवस सुत । कष्ट च मम नैवास्ति वैकुण्ठपति दर्शने ॥ 18 ॥ मन्दर कुन्धर गत्वा सुन्दरत्विन्दिरापतिम् । गन्धर्वसेवित सेन्द्रवृन्दारकमनोरथम् ॥ 19 ॥ अमृताब्धौ सुधासिद्धि पर्यन्तमकरोद्धि य । त नतोस्म्युन्नते देशे तिष्ठन्त चाष्टसद्भुजम् ॥ 20 ॥ तस्मिन्मन्दारवृन्देच

मादार. कश्चनागत । सौन्दर्य सारसान्द्रश्चैवेन्दिरेवेन्दिरापतिम् ॥ 21 ॥ मम सौन्दर्यसारंच दृष्ट्वा हृष्टो बभूवच । अनड्ग वशमासाद्य स्वाड्गानि मम दर्शयन् ॥ 22 ॥ अनड्ग सडग नि.सड्ग मा सन्दृश्य सुविस्मित । अभवत्सभवानीव दृष्ट्वा च भवमव्ययम् ॥ 23 ॥ भवेदेतादृशो भर्ता ममचात्र भवे भवे । इति स्वस्येष्टदेवस्य तुष्टिं चक्रे यथेष्टत. ॥ 24 ॥ काष्ठमौन समासाद्य श्रेष्ठ सोऽतिष्ठदत्रच । अड्गुष्ट मात्रत प्रेष्ठ सुष्टुनिश्चेष्टता गत. ॥ 25 ॥ इष्ट दैव प्रति स्वेष्ट याचयस्तत्रवै स्फुटम् । इति दृष्ट्वाच तत्कष्ट मामुवाच स विठ्ठल· ॥ 26 ॥ तस्येष्ट कुरु शिष्टत्व ममाभीष्टमिद तव । मत्प्रेक्षाया परीक्षार्थ त पक्षीकृत्य पुत्रक ॥ 27 ॥ मत्वा रमापति साक्षात् परिरेभे मुदा तदा । त दार प्रत्युवाचेद मन्दार वनमध्यग. ॥ 28 ॥ किंदार जन्मकामार्त वृन्दारकगुरुं प्रति । भवान्तरे भविष्यत्तेऽभीप्सितं मास्तु तद्व्यथा ॥ 29 ॥ " सत्य मयोदित कान्त तावत्पत्य तप. कुरु " । इत्युक्तो हरिणा दारो गिरिमूर्ध्नि परात्परम् ॥ 30 ॥ शरण्यं शरण प्राप मा स्मरन् हृदि सर्वदा । मामपि प्राप्तवान् कामात् कमनीयं त्वमानवम् ॥ 31 ॥ समानय मनस्तेन शमयानड्ग सड्गमम् । भवान्तरेऽपि मा धीर तेऽधरामृतमन्वहम् ॥ 32 ॥ वितरायैं तदर्थेच मत्कर शिरसा धरन् । अह यास्ये त्वया दत्तविश्वासं सत्यमेवच ॥ 33 ॥ कुरु शीघ्र सुरश्रेष्ठ श्रेयसे मे भवाय च । इत्युक्त्वा प्रययौ दार. कामराहित्यमार्यंज ( मार्जवम् ) ॥ 34 ॥ ख्यापयामास लोके मे सर्वत्र सुचरित्रिण । इमा कथां येच नित्यशृण्वन्ति यतयोषितु ॥ 35 ॥ लभन्ते कामत शान्ति सुत सत्य मयोदितम् ॥ 35½ ॥

## 2. लक्ष्मीपति प्रकरण ( 36–61 )

मयोक्त श्लोकपूगेषु व (त्य) कनु योग्यान् पृथक्कुरु ॥ 36 ॥ ये लौकिकार्था भासन्ते श्लोकास्तान् कुलभूषण । चतुरध्यायगान् साड्ग गड्गास्नान फल तव ॥ 37 ॥ मड्गलायन माशास्य नि सड्गस्य वचोमम । अष्टाध्यायेषु शिष्टाना तुष्टिं कुरु यथेष्टत. ॥ 38 ॥ प्रौढि पश्यामि ते सुष्टु ममेष्ट शिष्ट साधय । इति च द्वादशाध्यायान् कुरु शीघ्रं बुधाग्रत. ॥ 39 ॥ अहमाकाशगो नित्य नाकिभि· सहलोकदृक् । पाकशासन मुख्याना तोक मे शृणु वैभवम् ॥ 40 ॥

मद्विमानमथाकाशे निमिषार्धेन च द्रुतम् । विरिञ्चलोक पर्यन्त धावतीत्यधिरोप्य माम् ।। 41 ।।
चक्रवद्भ्रमते तत्र शक्रलोकेच पुत्रक । वक्रबुद्धिहृद शल्यमिव चङ्क्रमतेऽनिशम् ।। 42 ।।
दिक्षु सर्वासु वृक्षेषु नन्दनस्थेषु नन्दन । स्यन्दनेन चराम्यङ्ग गङ्गातीरे तरङ्गिणि ।। 43 ।।
एव महानुभावोहं भानुमण्डलग हरिम् । तद्रथस्योपरि प्राप्य प्रार्थयामि तमीश्वरम् ।। 44 ।।
कमनीयं कामहीनोप्यनिशं भानुमन्वहम् । मानितस्तेन देवेन मानिन् शृणु हरिप्रियम् ।। 45 ।।
नानाविधैरनेकैश्च वाहनै र्वाहकैर्युतै । चरामि मारतात च स्मरामि हृदि सर्वदा ।। 46 ।।
मर्त्यलोक तु हित्वाह सत्यलोकमितोऽगमम् । श्रुत्यभाव कर्तुकामो दैत्यः कश्चिद्धतो मया ।। 47 ।।
इति पूर्वं मया प्रोक्तमनुसन्धत्स्व बुद्धिमन् । तस्मात्सर्वोत्तमो नित्य जगतः पतिरप्रति. ।
श्रियः पति सुरपतिः स विरिञ्च पति. स्वयम् ।। 48 ।। मयोक्त सर्वोत्तमत्व श्रुत्वा सर्वे सुरारय. ।
गर्विता वै हरि नागु श (शा) वं चापि गुरुच मां ।। 49 ।। साम्य बुध्या तामसास्ते मेघच्छन्नमिव
ग्रहम् । कामतात कोमलाङ्ग मानव मेनिरे हरिम् ।। 50 ।। मयोक्त सर्वोत्तमत्व श्रुत्वा सर्वे
हरि प्रिया । गुर्वन्तर्यामिण स्वैर कर दास्यन्तु भूरिश ।। 51 ।। ममापि जीवोत्तमत्व श्रुत्वा सर्वे
मम प्रिया. । गर्व हित्वा प्रदास्यन्तु गुर्वन्तर्यामिण करम् ।। 52 ।। इत्थ सर्वोत्तमत्वं तु श्रुत्वा
सर्वेऽपि सात्विका. । हित्वा ससृति मार्गं तु यान्तु विष्णो सलोकता ।। 53 ।। एव मया जगत्सर्व
वैष्णवचास सात्विकम् । आसुर शार्वमेवास मयोक्तेऽपि स्वयोग्यत ।। 54 ।। मद्भक्ताः सुखिन. सन्तु
शश्वज्जीवन्तु मत्प्रिया. । ममाभक्ता प्रयास्यन्तु तमोन्ध तामसाश्चते ।। 55 ।। अहं नक्षत्रमध्यस्थ
सुक्षेत्राणि प्रकाशयन् । तत्क्षेत्रवासिनः सर्वे भिक्षामात्र ददुश्चमे ।। 56 ।। इतितेषा वदन्नित्य
तन्मध्यस्थो भवामिच । मत्तेजसा तिरस्कारः सर्वेषा तेजसामभूत् ।। 57 ।। यथा सूर्यप्रकाशेन तेज-
साच तिरस्कृति. । तथामत्तेजसा सर्वतेजसा च तिरस्कृतिः ।। 58 ।। स्यात्पश्यताच नेत्राणि मुष्णन्
विष्णवाज्ञया सदा । अह निषण्णस्तन्मध्ये विषण्णास्सर्वे एव ते ।। 59 ।। इत्थ तैजसदेहानां
सन्दोह सददाति मे । बुधाग्र्यस्य स्वपादाब्ज सेवया वै गदाधर. ।। 60 ।। शारदा नीरदश्यामा
नारदाऽऽराधिताऽऽदरात् । वेदोदरी श्रीधराज्ञाधारिणी मे सुवाग्धरा ।। 61 ।।

3. विप्र प्रकरण श्लोक – ( 62-102 )

रथस्योपरि तिष्ठन्तमरुणोन्यरुणद्धिमा । वरुण प्रति गच्छन्तं चरणेन विनाकृत. ॥ 62 ॥
मात्रा भ्रात्रा विहीनोह त्राता त्व मम सर्वदा । यात्रा न कुरुचात्रापि तिष्ठ रूपान्तरेणच ॥ 63 ॥
गरुडाग्रज इत्थ मामवदज्जरठाद्यच । इति तेनोक्त एवाह कान्तरूपान्तरेणच ॥ 64 ॥
वसामि वसुभिः साक कश्यपात्मज पूजित । करटाभ स्वबुध्यात्व मद्बुध्या श्रेष्ठ एवच ॥ 65 ॥
वरुणोऽपि तदाह्वातुमागतो मा प्रति प्रिय । कान्तरूपान्तरेणापि तद्गेह गतवानहम् ॥ 66 ॥
यमोऽपि मा समाह्वातु स्वयमेवागतो महान् । रामस्वामीक्षते काममागमिष्यतिमत्प्रिय ॥ 67 ॥
इत्यवोचद्वचः प्राञ्चन् काञ्चनेच्छाऽरुचिचमाम् । हरिलाञ्छन सञ्छन्न शङ्खचक्राङ्कित भुजे ॥ 68 ॥
कान्तरूपातन्रेणापि तद्गेह गतवानहम् । शान्तं कान्त पराक्रान्त राम त सन्नतोस्म्यहम् ॥ 69 ॥
इन्द्रोपि सान्द्रसन्तोषादुपेन्द्रस्याज्ञया प्रभुः । केन्द्रस्थानगते चन्द्रे मुनीन्द्र मा समाह्वयत् ॥ 70 ॥
कान्तरूपान्तरेणापि तद्गेह गतवानहम् । तमुपेन्द्र चिदानन्दसान्द्र सुन्दर रूपिणम् ॥ 71 ॥
कन्दाशनेन्द्र वन्द्योऽहमिन्दिरापतिमव्ययम् । नतोऽस्मि तस्य सन्दृष्टि सङ्गतोऽस्मि समागमम्
॥ 72 ॥ प्राप्तोस्मि स्वामिन श्रीनिवासस्य मनसाप्यहो । पापान्धकार सरुद्ध कुर्वन् यो दीप
मालिकाम् ॥ 73 ॥ कोपान्धकारितमुख भास्करि च न पश्यति । तदैव मा समाह्वातु धनदोऽपि
समागतः ॥ 74 ॥ सदैव मे गृहावास विबुधेन्द्र कुरु प्रिय । इति मामुक्तवान् भक्त्या शक्त्या
हस्त प्रगृह्य मे ॥ 75 ॥ स्वगृह प्रापयामास प्रीत्या विप्र न सशय । कान्तरूपान्तरेणापि तद्गेह
गतवानहम् ॥ 76 ॥ तदैवशूली शिरसि त्रिशूली हस्तेगले सक्त नृरुण्डमाली । दलीकृतान्धश्च
शिलीमुखेषु हालाहली गलमध्ये महात्मा ॥ 77 ॥ श्मशानवासी धृत भस्मराशि र्भस्मीकृतत्रिपुर.
पौरुषेण । भस्मासुराज्जातभयी पिनाकी नाकीश्वरं मा समुपाजगाम ॥ 78 ॥ गङ्गाधरो
मङ्गलनाम मूर्ध्नि ध्यानान्तरङ्गी सर्वलिङ्गान्तरस्थ (स्वार्धाङ्ग्याचसार्ध) ॥ 79 ॥ उत्तुङ्ग कैलास
कृताङ्गवासो नि सङ्गिनं मांत्वागत. स्वागतोक्त्या ॥ 80 ॥ आह्वयामास मा प्रीत्या मापते प्रिय-
मुत्तमम् । कान्तरूपान्तरेणापि तद्गेह गतवानहम् ॥ 81 ॥ एव सर्वेपि देवाश्च कालेनैकेन मा तदा ।
आह्वयामासुरायान्तमगम बहुरूपकैः ॥ 82 ॥ भस्मराशिरिति प्रोक्ते धृतेत्युपपदेन च । साक शोक

विहीनेन कृतभस्मेति चोच्यते ।। 83 ।। ताळपत्रे तथा विप्र लेखन नैवकारय । लोकवार्तां त्यज त्व तूलूखले बद्ध गोपकम् ।। 84 ।। स्मर क्षिप्रप्रसादतु सकरिष्यति दारक । द्वारकापतिरेवाय मद्वृन्दावन मारच ।। 85 ।। नीलात्मकस्तदैवाग्नि: कालाग्निरिव लोकहा । ममालय समागच्छ मा पालय सुशीलभो ।। 86 ।। इत्युवाच सतेजस्वी तेजोरूपच मा प्रति । कान्तरूपान्तरेणापि तद्गेह गतवानहम् ।। 87 ।। तदैव निॠॠति प्राप्तो वररुचिरुवाच सर्वदा । वायुप्रभृतिभि. सार्धं स्वैर विहर मद्गृहे ।। 88 ।। इत्युक्तवन्तस्ते सर्वेप्याह्वयामासुरञ्जसा । तत्तद्रूपान्तरैरेव तत्तद्गेह-मगा तदा ।। 89 ।। व्यञ्जनस्याधिकत्वेन न छन्दस्य ( स्ये ) ति दूषणम् । स्वच्छन्दवृत्तेर्मम कश्छन्दोभङ्गएवच ।। 90 ।। इत्थमेवाष्टदिक्पालै. स्पष्ट सम्प्रार्थितोस्म्यहम् । हृष्टरूपान्तरैरेव शिष्ट यामि दिशोदश ।। 91 ।। मूलरूपेण बालार्क सदृश कमलेश्वरम् । नीलमेघ प्रतीकाश लोक-दृष्ट्या महाबलम् ।। 92 ।। समयेन दृढ बध्वा कमनीय च मानवम् । शमन तन्मनः काम वामन त नमाम्यहम् ।। 93 ।। चन्द्रमण्डलग विष्णुमिन्द्राण्याखण्डलार्चितम् । सान्द्र कमण्डलुधर चोपेन्द्र चाण्डलग्नकम् ।। 94 ।। भजामि भजनीय त भुजगेश्वरशायिनम् । कुजनाशङ्कया जात वृजिनार्ति हर च मे ।। 95 ।। मयि ब्रह्मा च वायुश्च वर्तेते सर्वदाऽपि हि । यावन्मम विमुक्ति स्यात्ताव-त्पर्यन्तमेव च ।। 96 ।। अतोमयायदुक्ततु तत्सर्व युज्यते मयि । अधिकारिषु सर्वेषु चोत्तमोहं न सशयः ।। 97 ।। इद सर्वेपि जानन्ति देवाश्च ॠषयस्तथा । गन्धर्वा अपि सर्वेऽपि दानवा मानवाश्च न ।। 98 ।। सर्वलिङ्गान्तरस्थश्च मयोक्त त्यज्यते त्वया । मयानुक्तमपि स्वार्धाङ्ग्याच सार्ध तु गृह्यते ।। 99 ।। उक्तमेव तु वक्तव्यमनुक्त न कदाचन । मत्सत्रभोजन भुक्त्वा मदुक्त त्यक्तवानसि ।। 100 ।। मयाद्विमुखतश्चोक्त सुमुखप्राक् द्विधाकृतम् । इदानी मुख्यमेवोक्त एकेनैव मुखेनतु ।। 101 ।। अनेकमुख सम्पन्न मुखमेवानुभूयते । मखैरपिदुरापन्न खग मुख्यैश्च दैवतै: ।। 102 ।। एतत्सर्वं स्वाप्न पद्येन गर्व हित्वा सर्वे विप्रवर्यास्यजेन । श्रुत्वा चोर्व्यां शर्वगुर्वादि-

देवान् दृष्ट्वोर्वशी यान्तु मां मानवेन्द्राः ॥ 103 ॥ इदं वृन्दावनाख्यानं ये पठन्ति मनीषिणः । मुकुन्दावनमेवास्तु तेषां कन्दाशनाज्ञया ॥ 104 ॥ इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात् । समं सहस्रशीर्षस्य सूक्तस्य पुरुषात्कृतम् ॥ 105 ॥ यच्छृण्वतां भक्तिरुदार सद्गुणे हरौ हरेर्लोकगते तथा मयि । भवत्यहो सर्वशुभाप्ति सन्मतीः ददात्यजस्र सुत सत्यमेवतत् ॥ 106 ॥

ॐ इति श्रीस्वाप्नवृन्दावनाख्याने वैभवपर्वणि अष्टमोऽध्याय समाप्तः ॥

॥ **श्रीकृष्णार्पणमस्तु** ॥

# अथ नवमाध्यायः



## 1 विप्र प्रकरणं ( 1-50 )

हरि. ओ ।। हनूमान् बहुनामाय न्यहनद्गहनादरी । सहनामामदारूपो महानाम्नि महोत्सवे ।। 1 ।।
नमामि त महात्मानं हनूमन्तमथाहवे । न्यहनद्यो महारक्षो ह्यक्षं त्वक्षय विक्रम. ।। 2 ।। रेमे सेवासु
निरतो कामेन रहितः सदा । यस्य नाथ. प्रसन्नात्मा ददौ स्वत्मानमेव च ।। 3 ।। तद्वन्ममापि
कामेन हीनस्य मनसाप्यहो । नाथोह्यात्मानमेवासौ हयग्रीवो ददौ मुदा ।। 4 ।। परिरम्भण
व्याजेन मन्दरे गुणवारिधिः । गणयन् सतु त दार उद्दिश्य मम सद्गुणान् ।। 5 ।। अह राजाधि-
राजश्चाप्येतदुत्तर जन्मनि । भवाम्नि स भवानीव मां तु यास्यति या पुरा ।। 6 ।। मन्दरे सुन्दरं
मां तु दृष्ट्वा कन्दर्प मोहिता । इन्दिरापतिमाराध्य वरदं प्राप तद्वरम् ।। 7 ।। सा गमिष्यति मां
तस्मिन् जन्मनि प्रियवादिनी । साधिनी स्वमनोरथ्य सार सौन्दर्य सारत ।। 8 ।। कनकांबर सवीता
मणिकाशितभूषणा । गणिका जातिका त्यक्त्वा झणिकारवनूपुरा ।। 9 ।। दारा. पुसीतिवश्चार इति
नो शाब्दिकैर्वृत । उदार कामहीनस्य सदारः पुरुषोयथा ।। 10 ।। इत्यभिप्रायतोप्येकवचनेऽपि
प्रयोजित । दारशब्द परैरुक्त दोषोपि मम नास्यतः ।। 11 ।। एधमानद्विडप्येतत्कृतवान्
देवराडसौ । मां प्रौढ भक्ति सम्पूर्णमारोप्य गरुडोपरि ।। 12 ।। जगाम निमिषार्धेन मेरुमूर्ध्नि
स्वमन्दिरम् । तस्मान्मन्दरग प्राप सुन्दरं स्वस्य विग्रहम् ।। 13 ।। तस्मादपि ययौ श्वेतद्वीपं
मामधिरोप्यच । पीताम्बरधर. स्रग्वी श्रीपतिः श्रेयसा पति. ।। 14 ।। श्वेतद्वीपादपि प्राप
प्लक्ष द्वीपं सुपावनम् । अपापतेश्चोपकण्ठे विपतेश्चावरोप्यमां ।। 15 ।। गरुत्मानं समाहूय मानय
न्निदमब्रवीत् । मघोनाऽमृत मानीय मामकस्य मुनेर्दिश ।। 16 ।। इत्युक्तः सतु नत्वाच वैनतेयो
विहायसा । गत्वा स्वर्गपतेस्तच्चह्यमृतं प्राप सत्वरः ।। 17 ।। आदाय गरुडः प्रौढ. चोड्डीयोड्डीय
पक्षिराट् । आढकेन मित षोढाप्ररूढ पौरुट स्थितम् ।। 18 ।। पाययामास मां पापरहितं पिहितं
करे । स्थापयामास पादाग्रे श्रीपतेः शेशितं च यत् ।। 19 ।। दिव्यं तदपि गोविन्दो गोदोहन करेण
च । मा गोसवे गोसवेच पाययामास नेतरम् ।। 20 ।। ममामृत प्राशनं च ये शृण्वन्ति नरा भुवि ।

अमृत प्राशन कृत्वा त्वमृतत्व भजन्ति ते ॥ 21 ॥ प्लक्षद्वीपादपि प्राप प्लवमान इतस्तत ।
उपप्लाव्य तदा विष्णुरपप्लव विवर्जित ॥ 22 ॥ तदनन्तरमन्विच्छन्ननन्तासन मेवच ।
अनन्तशयन द्रष्टु अनन्तो यो गुणैरपि ॥ 23 ॥ अनन्तपदमासाद्य चानन्तोपरि सस्थित ।
अनन्तशयन प्राप ह्यनन्तासनग हरिम् ॥ 24 ॥ तेनैकीभूय कालेन नानात्वं मयि नास्तिच ।
इतिनो दर्शयामास नेत्रयोरपि मानव ॥ 25 ॥ इन्द्राणी मा समानीय चेन्द्रेण सह मन्दिरम् ।
उपेन्द्रोऽपि तदाचाप्त श्चेन्द्रेण सहचेक्षितुम् ॥ 26 ॥ भद्रादेवी समायुक्त सुभद्रार्थ तदैव मा ।
भद्रासने समारोप्य भद्रामारार्तिका व्यधात् ॥ 27 ॥ अरुन्धती समायुक्ता वृन्दावन कृति त्विमाम् ।
स्वमन्दिरे समाधाय चेन्द्रेण सहचार्चयत् ॥ 28 ॥ एव सर्वाश्च देव्यस्ता पतिभि सहमन्दिरम् ।
मा समानीयचानर्चुः वृन्दावनकृति त्विमाम् ॥ 29 ॥ तस्मात्स्वमन्दिरे सर्वे वृन्दावन कृतेः परम् ।
प्रकुर्वन्त्व ( न्त्य ) चैन सम्यगारार्त्याच समन्वितम् ॥ 30 ॥ मद्वृन्दावन मेवात्र सद्वृन्दावनमेवहि ।
तद्वृन्दावनगः श्रीश सद्वृन्दावनग सदा ॥ 31A ॥ येन वृन्दावनाख्याति र्जाता चात्र दिने दिने ।
तस्मै नन्दन ( चानन्द ) धान्य वा धन वा कि न दीयते ॥ 31B ॥ मद्दोर्दण्डेन चोर्ध्वाण्ड
दक्षिणेन गुणिन् स्पृशे । सव्येनाधस्थमप्यस्मिन्लोके पावकवज्ज्वलन् ॥ 32 ॥ त्रसरेणुरजस्थाणु.
परमाणुरह भजे । पारिमाण्डिल्यवत्सौक्ष्म्य शाण्डिल्यो वेत्ति शौण्डिल ॥ 33 ॥ मेरुवद्गुरुभारोह
तूलवल्लघुता व्रजे । व्यापकश्चाकाशवच्च भागशो योगतोऽभवम् ॥ 34 ॥ मद्योगबलतो नाना-
देहगो भोगवानहम् । सौभरिर्यद्वदभ्राभो मद्वत्को भ्राजतेऽधुना ॥ 35 ॥ अणिमाद्यष्टाङ्गयोग
मणिमान्दुष्ट राक्षस. । फणिना मानितं दष्टन् तत्पदाङ्गुष्टतो हत ॥ 36 ॥ तद्वत्साष्टाङ्गयोगेन
मया वादेन चाहत. । मायावादिमताचार्य पूर्व क्रोधवशाधिप ॥ 37 ॥ तस्मादाचार्य वर्येषु
मताचार्या. सुरोत्तमा । आचार्येष्वपि तेष्वत्र मध्वाचार्य. परोमत ॥ 38 ॥ वेदेषु सर्वेषु हरि
सुरोत्तमः पूर्वेष्वथाचार्य मतेषु तन्मतम् । गुरुष्वपीह प्रवरेषु गौरवात् पूर्णप्रज्ञ सर्व शास्त्रेषु तद्वाक्
॥ 39 ॥ ममास्थिजातान्यपि तस्थिवासि ( तस्थुषासि ) चक्राङ्कितान्येवक्रमन्ति विष्णुम् ॥ 40 ॥
तत्पादजाम्भस्सु सुपावितानि यत् देह मा तत्पदक नयन्ति ॥ 41 ॥ भुजास्थिनी शङ्ख चक्रे सुवृत्ते
जान्वस्थिनी पद्मगदे च जाते । उरोऽस्थि तन्मूर्तिरूप प्रजात शिरोऽस्थि नारायण मुद्रितंच ॥ 42 ॥

दन्तास्थि तत्पाद पद्मं च जात वृन्तास्थि तच्छाड्र्गधनुश्चजात । कर्णास्थि तद्वाणरूपं प्रजात पादास्थि दामोदर पाद पार्श्वम् ॥ 43 ॥ सदाच मा प्रापयामास शीघ्र कदापि ससारगतिं ददाति । न मे पदं तस्य महात्मन. प्रभो. ॥ 44 ॥ इत्थन्तु सर्वाण्यस्थीनि विष्णोश्चक्राङ्कितानि च । जातानि जननादचच नाशयन्ति मम श्रमम् ॥ 45 ॥ हे मुग्धविप्र दधिदुग्ध पयोनिधौच बध्वा हरेस्तु पदमेव सुभक्तिपाशैः । दग्ध्वा कलेवरमिद सकलाधिव्याधिग्रस्त च योग बलतः प्रवसामि पार्श्वे ॥ 46 ॥ यथा दुर्योधनकृत दग्ध्वा जतुगृह पुन. । द्वैपायनस्य पार्श्वेपि ह्युवास कुरुनन्दनः ॥ 47 ॥ उदार गुणसम्पन्न. सदारश्च भवान्तरे । वृन्दावन गुरोराज्ञा मन्दार वनगस्य मे ॥ 48 ॥ दिव्यरागान्वित-ग्रीवो द्रव्यराग विवर्जित. । करादागत वित्तानि सदारेभ्योऽददां सदा ॥ 49 ॥ वैराग्यगुण सम्पन्न सदा राज्यपराङ्मुख । एष्यच्च निश्चित सर्वमतीतत्वेन भण्यते ॥ प्रेष्य सत्य मया प्रोक्त विश्वासं कुरु सर्वथा ॥ 50 ॥

**2 लक्ष्मीपति प्रकरण ( 51–75 )**

इत्थं ब्राह्मण मुख्येन श्रुत्वा वै गुण वैभवम् । गणयत्स्वपि देवेषु भणसत्सुच मामिह ॥ 51 ॥ अह शुभोद सागरेऽन्वह विभोर्हि वासरे । सुहसरूपिणो हरेर्गृह सरामिरेऽरमम् ॥ 52 ॥ कारितु सर्वभृत्यैश्च तारित भवसागरात् । स्मारितु सर्वश्रेयासि प्रेरितु सर्वश सुरान् ॥ 53 ॥ अह ममेत्यहङ्कार रहितो वै हरेरिह । करोम्यहरह कर्म हसो हस रहस्यकृत् ॥ 54 ॥ हंसोपि हसवाहस्य सुयश ज्ञानमुत्तमम् । ससारोत्तारणाशच मामपि प्राक् शशंसह ॥ 55 ॥ कसारि श्वेतवाहस्य ससार नाशयेद्यथा । कास्यं कास्यस्य कर्तव सशोधयन्ति चोद्धवम् ॥ 56 ॥ सदेवो वरदो मह्य कदाचेह समागतः । इतिमामुक्त-वान् सक्त स्वपादेचावदत्यजत् ॥ 57 ॥ अहमानन्दमुनिना सदानन्द प्रसङ्गिना । सहनाना विधा श्रीनाथस्यगीता. (नाना विधागाथा श्रीनाथस्य इति पाठान्तरं) स्मराम्यहो ॥ 58 ॥ तद्दर्शनो द्धृढ-हृदय सस्कार. शुद्धसात्विक । बद्धसौहृदतत्पाद पद्मेहं पतितोऽस्म्यहो ॥ 59 ॥ तेन सार्कं बदरिकाश्रम शोक विनाशकम् । तत्रापिदृष्ट्वा श्रीवास सर्वसिद्ध सुसेवितम् ॥ 60 ॥ शुकस्य जनक वै वासिष्ठ-कृष्णं नतोस्म्यहम् ॥ 61 ॥ अह घनोदक चापि ह्यतिलङ्घ्य महाध (घ) नम् । धनूरत्नच पश्यामि पुरामधुविभेदनम् ॥ 62 ॥ बाणं च शाण सयोगान्निशित द्युमणिप्रभम् । पश्यामि गुणसबद्ध

शार्ङ्गिण. करभूषणम् ।। 63 ।। प्रासं च भासमानं तं न्यास कर्मणि कोविद. । पश्यामि श्रीपतेर्दा-
स्यात् सोहं भाव विवर्जित. ।। 64 ।। अह ब्रह्मास्म्यह ब्रह्मास्मीति यो वक्ति हिंसकः । स्वहिंसा ब्राह्मण
ब्रह्मण्यारोपयति नान्यथा ।। 65 ।। ब्रह्महिंसात्मकस्यास्य महा ब्रह्महति. सुत । भवत्येवान्धतामिस्रे
पतत्येव न सशयः ।। 66 ।। सामान्य ब्रह्महत्यस्य प्रायश्चित्तं श्रुतौ स्मृतौ । नविद्यते द्विजश्रेष्ठ
महाब्रह्म हते. किमु ।। 67 ।। वक्तव्य तत्रकर्तव्य तत्र नास्ति बहिष्कृति । सुविस्तृतेऽन्धतामिस्त्रे
पतन्त्येतन्मताश्रिता. ।। 68 ।। तस्मात्सोहृ भावयुक्ते महत्पाप भवेद्ध्रुवम् । महापापगति याति स
हाहेति वदन्सदा ।। 69 ।। सोहृ भावान्मोक्षमाप्नोषि जीव तस्मादन्ध याति तामिस्र मेव । दासोह
मामुद्धरस्वेति हन्तचान्ध तमोनैव यातीह (यातीति) कामम् ।। 70 ।। प्रार्थय प्रार्थ्यमान त
सार्थीकुरु मनोरथम् । कार्तस्वरतरं चार्थ्य पदमारोह तद्धरेः ।। 71 ।। हे भेदवादिंस्तव भेदसिद्ध्यै
सत्य हि दैत्यादि वदस्व मानम् । तदैक्यवाद जहियोहमस्मि ब्रह्माहमस्मीति कुवादिनोक्तम् ।। 72 ।।
जित्वाचाभेदवाद त दत्वा शिष्येषु सन्मतिम् । श्रुत्वा च गुरुणा तत्व गत्वा च हरि मन्दिरम् ।। 73 ।।
तत्रापि सच्चिदानन्दरूप पश्य हरेरपि । स्मराभेद जय चापि यत्फल हरिदर्शनम् ।। 74 ।। अह
घनोदकं तीर्त्वा मनोवेगेन मानव । करोमि ब्राह्मणमुखादाख्यान शोकनाशनम् ।। 75 ।।

3 विप्र प्रकरणं:– ( 76–101 )

अहमाकाश मार्गेण नाकीशमगम हरिम् । लोकेशं पश्य दासत्व तोकावश्य हृदिस्थितम् ।। 76 ।।
नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा । तस्याः शिखायामध्ये च य आत्मा संव्यवस्थित ।। 77 ।।
तं पश्य हृदयाकाशे महाकाशे यथा रविम् । कोटि सुर्य प्रतीकाशं चन्द्र कोटि विकासितम् ।। 78 ।।
त्वत्सकाशाद्भिन्नमेव तत्सकाशादिदं जगत् । कासारे च यथा भातमाकाश चोपरिस्थितम् ।। 79 ।।
तथात्वद्हृदयाकाशे भात सूर्यान्तरे स्थितम् । किरीट हार केयूर स्फुरन्मकर कुण्डलै ।। 80 ।।
विराजन्त हरिं पश्य नेत्रयोरति सुन्दरम् । शङ्ख चक्र गदा पाणि नारायणमरिन्दमम् ।। 81 ।।
सरोजासन मध्यस्थं अरुणेनादरार्चितम् । स यश्चाय पुरुषे यो रविमण्डल मध्यगम् ।। 82 ।। तमेक
पश्य देवेशं दासस्त्व हृदिसस्थितम् । एवंमदुपदेशेन को देशो ज्ञानगोचरः ।। 83 ।। वेदेश तु न
जानाति तं वदस्वाद्यनन्दन । ब्रह्मन्कन्दाशनेन्द्रोह चन्द्रान्तर्यामिणं हरिम् ।। 84 ।। सन्दृश्याम्यत्र

सान्द्रेण नन्दनैवाशु नन्दित. । त दृष्ट्वानन्तमव्यक्त शीताशुकरमच्युतम् ।। 85 ।। अमृतावत
कराल्लोके विकिरन्त मुरान्तकम् । भजामि कामजामार्ति त्यजामि करजात मे ।। 86 ।। सृजामि
वाचो जालानि तज्जात गुणजानिच । अहं सप्तसमुद्रेषु सप्तद्वीपेषु सञ्चरन् ।। 87 ।। सप्तस्वपि
पर्वतेषु सप्त सप्ति रथेऽपिच । सप्तलोकेषु नित्यच सप्तर्षि तुषितार्पितै ।। 88 ।। सप्तमी मिश्रिता-
श्विन्या सप्तकाञ्चन भूषणै. । अलङ्कृत. कलङ्केन हीनै. सम्राडिव प्रिय ।। 89 ।। वेङ्कटाद्रौ
शङ्खभेरी नाद श्रुत्वागमं हरिम् । जनार्दन जनाना तु जननार्दन कारिणम् ।। 90 ।। जनित्र ब्रह्मण.
कञ्जनेत्र जनमनोत्सवम् । दृष्ट्वा हृष्टोभवाम्यष्ट तिथिषु श्रेष्ठ भाजनै ।। 91 ।। पौरुटैर्दत्त
मृष्टान्न शिष्टै सह मठाधिपैः । अश्नामि कृत्वा स्नानानि सुस्वनोर्जित सस्तवै · ।। 92 ।। श्रुत्वा
प्रश्नानि तेषाच कात्स्न्यद्विवच्मि तद्गुणान् । अहं तै. सहितोप्यत्र चागतो यतिभि. कृतिन् ।। 93 ।।
द्रष्टु त्रिविक्रमस्यापि रथोत्सवमथो हरे । त्रिकोटि यतिभि. साक अटामि मम सेवकै· ।। 94 ।।
मठेपि तव हे तोक रटामि परमार्थकम् । मृष्टान्न देहि तेषा च मृष्ट काञ्चन भूषणै. ।। 95 ।। नष्ट-
कामं मामपि त्वं सुष्टु पूजय पुत्रक । हे शिष्ट श्रेष्ठ पूजां मे स्पष्ट कुरु हरेरपि ।। 96 ।। इष्ट
यथेष्टत. पुत्र नष्ट चापि ददाम्यहम् । निष्टप्तकटके श्रेष्ठ कटकं चापि कुण्डले ।। 97 ।। तटित्प्रभे
पादपीठे शिष्टे मयि मठागते । देहि ते हितसिध्यर्थ कोहि मेत्वां विनेहच ।। 98 ।। हितवान् देहिना
मध्ये जहि ते चाहितामपि । एवं ममाज्ञां प्राज्ञाद्य कुरुचाज्ञान बन्धनम् ।। 99 ।। निराकुरु तव ज्ञानं
जायते ज्ञानिष्त्तमम् । अतस्त्वत्सदृशो नास्ति यतिषु प्रेष्ठ मादृश ।। 100 ।। कीदृशोऽस्मद्गुणो
लोके त्वादृशोपि नविद्यते ।। 101 ।। एतत्सर्व स्वाप्नपद्येन गर्व हित्वा सर्वे विप्रवर्यास्यजेन ।
श्रुत्वाचोर्व्या शर्व गुर्वादि देवान् दृष्ट्वोर्वशी यान्तु मां मानवेन्द्रा ।। 102 ।। इद वृन्दावनाख्यानं
ये पठन्ति मनीषिण । मुकुन्दावनमेवास्तु तेषा कन्दाशनाज्ञया ।। 103 ।। इदमर्पितमेवास्तु हयशीर्षस्य
पार्षदात् । सम सहस्रशीर्षस्य सूक्तस्य पुरुषात्कृतम् ।। 104 ।। यच्छृण्वता भक्तिरुदार सद्गुणे
हरौहरेर्लोकगते तथामयि । भवत्यहो सर्वशुभाप्ति सन्मतीः ददात्यजस्रं सुत सत्यमेवतत् ।। 105 ।।

ॐ इति श्री स्वाप्नवृन्दावनाख्याने अलौकिकविभागे वैभवपर्वणि नवमाध्यायः समाप्त ।। १०५

।। श्रीकृष्णार्पणमस्तु ।।

# अथ दशमाध्यायः



**1. विप्र प्रकरण श्लोक** – ( 1–12 )

हरि. ॐ ।। गणै. स नारायण भूतनाथ समन्वित कर्ण विकर्ण सज्ञै । महामणीना बहुलै. सुकीर्ण मौलि ददौ मे शिरसि स्थिरोऽभूत् ।। 1 ।। कुबेर कोशादानीतं शोकापनुद कामदम् । दत्तवान् वित्तहीनं मे भूतनाथ. प्रतापवान् ।। 2 ।। कुबेरो दत्तवान्नारायण भूतस्य हस्तके । सोऽपि मे शिरसि प्रोत चकार शृणु पोतक ।। 3 ।। विप्रापहार्य ते पुत्रचरणाद्रौप्य भूषणम् । नारायणेनापहृत भूतेनाकार्यकारिणा ।। 4 ।। अतश्च त्रिगुण दत्तमेकैक चरणस्य मे । दुर्वर्ण कारय क्षिप्र तेन ते पुत्रभूषणम् ।। 5 ।। तस्मान्नचिन्ता कार्या मत्पुत्र चिन्तामणि भज । कान्तारे च यथैकान्ते स्वकान्त भजते सती ।। 6 ।। शैलराज सुता पैल मुनिमाहच सादरम् । कैलास शिखरे रम्ये तैलदीपावलि कुरु ।। 7 ।। इत्युक्त सोऽपि प्रत्युक्तिमवदद्द्विज पुङ्गव । करोमि वृन्दावनाग्रे कन्दाशन वरस्य मे ।। 8 ।। अव्यग्रश्चागत शीघ्र पैल कैलास पर्वतात् । तैल गोघृतमादाय शैल वृन्दावन मम ।। 9 ।। चकार दीपावलिभि: पापावलि विनाशनम् । ववर्ष पुष्पावळीश्च मधु पावलिसयुता. ।। 10 ।। एव सर्वेपि ऋषयो वर्षे वर्षे समावृता । चक्रु. सर्षपमात्राणि दुष्कृतानि प्रहर्षिता ।। 11 ।। काय. सन्निहितापाय प्राय: श्रेयस्करस्तथा वायु प्रवेशनोपाय तवायुर्वृद्धये वयम् ।। 12 ।।

**2 लक्ष्मीपति प्रकरण** :– ( 13–16½ )

कुर्म. कूर्मावितारेण पूर्णाशा पूरिताशिष. । सुपर्वाण सुपर्णेन काद्रवेया नचोद्धृता: ।। 13 ।। तथातथा सुतश्चाय कृनात्कृच्छ्रात् समुद्धृन. । तस्माद्वृथाकृतिश्चेय मत्कृता मास्तु ते सुत ।। 14 ।। श्रीमद्वृन्दावन भूमौ सोमवद्रञ्जन दिश. । कोमहान्नस्तुतिं कुर्यात् नो मन प्रियकारक. ।। 15 ।। कोमहान्दर्शन नैव कुर्यान्मूढं विना मम । हे नन्दन तव व्याख्यानाद कन्दाशनस्य मे ।। 16 ।। शतानन्दस्य लोकेऽपि सदानन्द विवर्धक ।। 16½ ।।

### 3. विप्र प्रकरणं – ( 17–43 )

अहमानन्द मुनिना सदानन्द प्रसङ्गिना ॥ 17 ॥ सह नानाविधागाथा श्रीनाथस्य स्मराम्यहो ।
तद्दर्शनो द्बुद्धहृद्य सस्कार· शुद्ध सात्विक ॥ 18 ॥ बद्ध सौहृद तत्पादपद्मेह पतितोस्म्यहो ।
तेन साक बदरिकाश्रम शोकविनाशकम् ॥ 19 ॥ शुकस्य जनक वै वासिष्ठ कृष्ण नमाम्यहम् ।
इति पद्यत्रय त्रार्यस्त्यक्तवानसि विप्रक ॥ 20 ॥ आकरस्थ लेखन च कारय प्राड्मयेरितम् ।
महीजश्चामहीजश्च सहोषतु रहोरह ॥ 21 ॥ हे वीरराहो हेऽवीर राहिता रहिताश्चये । पद्यस्या-
स्यार्थ सार तु नद्य. परम पावना. ॥ 22 ॥ उद्यन्तमिवचादित्य खिद्यन्ते तामसाश्च ये ।
एतत्पद्यद्वयस्यापि शक्यार्थ. केन हीयते ॥ 23 ॥ सोऽपिमत्सदृशो बुद्धचा प्राय श्रेयस्करो मम ।
द्वारैश्चतुर्भि परितो विभाति वृन्दावनं मन्दर सन्निभं मे ॥ 24 ॥ वृकोदराचार्य हनूमतांच ममापि
सन्मूर्तिभिरन्वितैश्च । कीट वासिष्ट कृष्णोऽय यथा पुष्णाति पूरुषम् ॥ 25 ॥ पटु स्वाप्नान् स्फुट
वक्तु श्लोकान् पुष्णाम्यह तथा । वृन्दावनेच देवाना वृन्दाः सन्तीह नन्दन ॥ 26 ॥ मुकुन्दपाद
पद्म ते विन्दन्त्यनिशमञ्जसा । ब्रह्मा ब्रह्मभवः शक्रो वक्रतुण्ड सुरेश्वरः ॥ 27 ॥ गरुड. शेष
भाष्यज्ञः सशेषः सोमभास्करौ । मित्रावरुण कारुण्य विषयाश्च विशेषत. ॥ 28 ॥ सुत्राम शरणं
प्राप्ताः पूषापिष्टादनस्तथा । एतेचान्येच बहवो बहुमान पुरस्सरा. ॥ 29 ॥ कुहुयोगेच सुहुतमग्नि
कृत्वा धन ददुः । ब्राह्मणेभ्यश्च सौपर्णश्रुतिज्ञेभ्यश्च पर्वणि ॥ 30 ॥ ब्रह्मणासह पुण्याहे सस्नु
र्धवलवारिणि । करं स्वैर विरिञ्चदि ऋभवो रत्न सञ्चयान् ॥ 31 ॥ वृन्दावनेच ववृषुः
हर्षपूर्णा. सहस्त्रशः । विष्णो र्निर्माल्य मालाश्च बालसूर्यामलप्रभा ॥ 32 ॥ बालव्यजन सवालाः
कालेदध्रुर्गलेकुहो· । सिनीवाल्यादि योगेऽपि निमील्याक्षीणिकाणवत् ॥ 33 ॥ सन्निलीनाः पलायन्ते
शरणं करुणार्णव । मग्नास्ते मन्सर. श्रेष्टे भग्नपापा बभूविरे ॥ 34 ॥ अग्नि हुत्वा च विधिवज्जा
मदग्नि ववन्दिरे । वृन्दावनगत देवास्त्विन्दिरापति मव्ययम् ॥ 35 ॥ मन्दाकिन्या जनि विष्णु
पुनरेव ववन्दिरे । तमनुज्ञाप्य देवेशा. स्वर्गं यान्ति सुमानिताः ॥ 36 ॥ पुनरायान्ति योगेषु
पुण्येषु शृणु नन्दन । एवं धवलगङ्गा मे विधुवद्धवला भुवि ॥ 37 ॥ प्रवालमणि सोपान त्रिवळीश-
युता बभौ । देवैर्निरन्तराक्रान्ता मन्वन्तर शतान्तरा ॥ 38 ॥ तन्वन्तरातिरिक्ताच धन्वन्तरि

कृतान्तरा । स्नानार्थं गच्छतां स्नायुबन्धनादि विनाशनम् ।। 39 ।। शिश्नात्कृतैनसा नाश करोति प्रश्नमात्रत । एव विधास्मत्कृतवैभवान्विता भूदेवदेवैर्नरदेव पूजिता । कृतान्तमार्गं त्ववगाहनोत्सुकान् सन्तारयत्येव हरेः सुतान्विता ।। 40 ।। एतच्चित्र कलिमलैः कलुषीकृत मानसा. । न जानन्ति नरा सर्वे कलौ भूतलवासिनः ।। 41 ।। एवं मद्वृन्दावनस्य सद्वृन्दा एव भूतले । जानन्त्यनन्त माहात्म्य नेतरे पापपूरुषा. ।। 42 ।। अह नमामीह महानुभावं हयास्यरूप हयमाप्तहारम् । मया सहैवाशु च हसवाहं यो हसरूपी न्यरुणत्पयोब्धौ ।। 43 ।।

## 4 लक्ष्मीपति प्रकरण :– ( 44-60 )

शाल्मली द्वीपमाश्रित्य सुमालीति बलाधिकः। निर्मलाख्यात लावण्य बालातपसमप्रभम् ।। पप्रच्छ सतुमां दृष्ट्वा विच्छिन्न त्रिपुरः ( त्रिशिरा ) पुरा ।। 44 ।। रुद्रोवाऽभद्रहीनोसि सुपर्णोवाऽर्णवातर । शेषो वा दोष हीनोसि वायुर्वाऽपायदूरग. ।। 45 ।। इन्द्रोवा सान्द्रसन्तोषी चन्द्रोवाऽमन्दतोषक. । कामोवा त्व च रामाणा मोहन रूपमाश्रित. ।। 46 ।। सूर्योवा शौर्यसपन्न. ऋषिर्वाऽपरुषवाचक । धनदो धनिनां श्रेष्ठो महाधन विभूषण ।। 47 ।। वरुण. करुणासक्त त्व कविः कोविदेश्वर । अथवा वादिराजाख्यो वागीश करजातकः ।। 48 ।। वादीभमृगराजत्वाद्वादि राजाभिधा तव । हयग्रीवाराधकत्वात्प्राग्र्यान् लोकास्तथागत ।। 49 ।। व्याघ्रचर्मापि सन्मान चाग्रपुजा चकार ते । इमा कथा काव्यकर्ता काव्योऽपि व्याजहारच ।। 50 ।। श्राव्यं पापविनाशाय न व्याजान्नचहास्यतः। इति तेनोदित श्रुत्वा कृत्वा तस्याप्यनुग्रहम् । स्मृत्वा हरेश्च माहात्म्यं पृक्त्वानदजलै र्भुवम् ।। 51 ।। ततश्च पावनान्वानप्रस्थान् वानरयूथपान् । वनराजिषु पश्यामि वनजान् मनुजाधिप ।। 52 ।। तन्मत शृणु कल्याण पुण्यात्पुण्यतम महन् । नारायणो गुणनिधि वाणीपतिमभाषत ।। 53 ।। श्रीमन्मध्वमत दिव्यं मद्भक्तेनोद्धृत सुत । मत्सर्वोत्तमतामुक्त्वा युक्तिमालाभिरञ्जसा ।। 54 ।। व्यासात्मना मया पूर्वं यदुक्त सर्वमेवतत् । जगत्सत्यत्वादिक च तात्पर्यविषय ऋते ।। 55 ।। तत्समर्थितमेवादौ समर्थेन महात्मना । प्राप्य तत्र कृतार्थत्व व्यर्थीकृत्य सुदुर्मतम् ।। 56 ।। मत्समीपमिहापन्ता वृन्ताद्यस्थीनि तस्य च । चक्रशङ्खाद्यायुध्यैश्चा-

थाङ्कितानि महात्मन· ।। 57 ।। तस्मात्तन्मतमेवाग्र्च ग्राह्य सर्वबुधैरपि । प्राग्र्चं लोकमवाप्नोति तन्मतेचाग्रहान्वितः ।। 58 ।। इति ब्रह्माणमुद्दिश्य गुणवारिधिरब्रवीत् । शृणु सत्यं मया प्रोक्त भण सर्व बुधान्प्रति ।। 59 ।। कृत्वा वृन्दावन तत्र फलं भावय मां विभुम् । अह वृन्दावने स्थित्वा सर्वाभीष्टं ददामिते ।। 60 ।।

## 5 विप्र प्रकरण (61-97)

इद ममात्मजे सर्वं वेदवेद्ये तपोनिधौ । वक्तव्य पुरत स्थित्वा नि शङ्क. सन् सदा द्विज ।। 61 ।।
विप्र त्व तव पुत्र तु मम नाम्ना समाह्वय । सुप्रीतत्व तु विज्ञाय मयि सर्वं समर्पय ।। 62 ।।
कामधेनुर्यथापूर्व सर्वाभीष्ट फलप्रदा । तथा कलौ वादिराजश्रीपादोऽभीष्टदः सताम् ।। 63 ।।
अदृश्य एव सर्वेषा सर्वाभीष्ट फलप्रद. । इद तु वेदवेद्याख्य श्रीपादस्य सुतस्यमे ।। 64 ।। वक्तव्यं
तत्रगत्वा तु नात्र कार्याविचारणा । भारतीपति वद्भाति भारतार्थ प्रकाशनात् ।। 65 ।। भारतार्थ
प्रकाशत्वात् तत्कर्तृ सदृशो हि सः । तत्कर्तृ सदृशत्वात्तु तद्वत्पूज्यो गुरु सताम् ।। 66 ।। पूज्यत्वान्नि
त्यमेवात्र वृन्दावन गत पतिम् । पूजयित्वा महात्मान महाभारत कीर्तनैः ।। 67 ।। ततोऽस्मत्त.
सन्तति वा सर्वेष्ट वा तदाहरेत् । इद तु सन्त सन्तत्या त्वामुद्दिश्य तथोक्तवान् ।। 68 ।। पूजनीयोगुरु
र्नित्य सर्वाभीष्टमभीप्सुना । इमामस्मत्कृति विद्याद्योविद्यात्त्वत्कृति नर· ।। 69 ।। स याति निरय
घोर मृषात्वगतिरीदृशो । कुष्ठापस्मार लूतान्तान् बालस्फोटादिकान् बहून् ।। 70 ।। मृत्तिका
नाशयत्येव वृन्दावनगता मुने । मया सम्पूज्यमानः सन् हयास्य पुरुषोत्तमः ।। 71 ।। लक्ष्म्या सार्ध
सुरै· सर्वैरत्र सन्निहित स्वयम् । इमा कृति शिलायान्तु लेखयित्वा ममाग्रत ।। 72 ।। स्थापयेदत्र
ता दृष्ट्वा सन्त सन्तोषमाप्नुयु । इमा कृति नरोयस्तु स्वाप्नी मन्दस्य बुद्धिदाम् ।। 73 ।। पठित्वा
सर्व पापेभ्यो मुच्यते नात्र सशय । अथ बुध्वा कृतेरस्या सर्वेष्ट लभते नर ।। 74 ।। यो अनुवक्ता
कृतिमिमां मम तोषस्य भूरसौ । ख्याति कुरुष्वाल्पमते मम कीर्ति नरेष्वपि ।। 75 ।। माच्छादय
शुभा शक्ति ममख्याति शुभेष्वपि । त्वा भक्तिमन्त विप्रेन्द्र न मुञ्चामि कदाचन ।। 76 ।। सेवस्व
मम पादाब्ज नित्य भारत कीर्तनै. भुक्ति मुक्ति ततो दद्या वचन मम विश्वसीः ।। 77 ।। आचार्य

त्व वृणीष्व त्वं मम पुत्रेण धीमता । पञ्चवृन्दावने पुण्ये पञ्चरुपात्मको हरि ॥ 78 ॥ पञ्चीकृत्य स्वरुपाणि नित्यं सन्निहित स्वयम् । इति जानन्ति ये मर्त्या प्रपञ्चे सर्व एव तु ॥ 79 ॥ पञ्च-भूतानि हित्वा तु पञ्चत्व न व्रजन्ति ते । पञ्चवृन्दावनं चात्र यो वा कारयिता मम ॥ 80 ॥ पञ्चाशद्युग पर्यन्तं विष्णोर्लोके महीयते । पञ्चपुत्रा भविष्यन्ति पञ्चानन समप्रभा· ॥ 81 ॥ पञ्चायुध धरस्याथ भक्ता एव भवन्ति ते । पञ्चभक्ष समायुक्त पञ्चामृत समन्वितम् ॥ 82 ॥ पञ्चखर्जूर सयुक्तं नैवेद्य विनिवेदयेत् । पञ्चम्याच तिथौ नित्य पञ्चपर्वसु पूजयेत् ॥ 83 ॥ धूपैर्दीपैस्तथामाल्यैर्गन्धै दूर्वाक्षतादिभि । एव सम्पूज्यमानोऽह दद्या वरमनुत्तमम् ॥ 84 ॥ अह क्षुधातुरो भूत्वा नैवेद्य नोक्तवान्मुनि । एतत्ते किञ्चिदाख्यात भक्तत्वात्त्वद्विभूतय ॥ 85 ॥ श्रुत्वा त्वन्मुखत सन्त सर्वे यान्तु स्वभीप्सितम् । इद ममात्मजे सर्व वेदवेद्ये तपोनिधौ ॥ 86 ॥ वदस्व मद्यासिन्धौ हयग्रीव तपोनिधौ । नैवेद्यार्थं मया प्रोक्त विशेष तिथि पर्वसु ॥ 87 ॥ आच्छा-दित च तत्पद्य त्वया दुर्मति सत्तम ॥ 88 ॥ स च दास्यति नैवेद्य यो वृन्दावनकृत्स्वयम् ॥ 89 ॥ वृन्दावनगता देवास्तस्य तुष्टा भवन्त्यहो । अह क्षुधातुरो भूत्वा नैवेद्य नोक्तवान् मुनि ॥ 90 ॥ पीत्वा चामृतमेवात्र देवै सह चराम्यहम् । दीपार्थ नोक्तवान् दीप तेजोमय सुविग्रह ॥ 91 ॥ गन्धार्थं नोक्तवान् गन्ध दिव्यगन्ध सुविग्रह । माल्यार्थं नोक्तवान् माल्यं दिव्य मन्दार माल्यवान् ॥ 92 ॥ चामरार्थ मयानोक्त दिव्य चामरवीजित । व्यजनार्थ मया नोक्त दिव्य व्यजनवीजित: ॥ 93 ॥ छत्रार्थं तु मया नोक्त दिव्य छत्र विभूषित. । भूषणार्थ मया नोक्त दिव्यभूषण भूषित ॥ 94 ॥ वाहनार्थ मया नोक्तमह दिव्यविमानग । भोगार्थ तु मयानोक्त दिव्य भोग सुभोगवान् ॥ 95 ॥ भवतामेव कर्तव्यं मम पादाब्ज पूजनम् । एवनिशम्य मम वैभवमत्र नित्य वृन्दावने सकल दैवत सन्निधाने । नानाघराशि शमनेऽति सुपापिनां च मूर्ति भजन्तु मम नित्यमथेष्टभाज. ॥ 96 ॥ वृन्दावन सकल दिग्गत सज्जनाना वृन्दावनं परम पावनमत्र नित्यम् । मन्दाकिनी जनक देव सदायन तत्कन्दाशनायनमिद प्रणमेत भक्त्या ॥ 97 ॥

**6. लक्ष्मीपति प्रकरण :– ( 98–104 )**

मद्त्त पुत्र मत्पुत्रं मज्जीवित कलत्रिणम् । मत्प्रसादाप्तवृत्ति त मा त्यज त्व स मामक ॥ 98 ॥

अयं तु ब्राह्मणः शुद्ध. सत्यवादी जितेन्द्रिय । अस्य स्वप्ने मया प्रोक्त विश्वासान्नात्र सशय. ।। 99 ।।
वेदवेद्य वदस्वत्वमागतेषु जनेष्विह । ब्राह्मण स्वाप्न पद्यार्थं प्रसिध्यर्थं ममात्रच ।। 100 ।।
शिलास्था कुरु विप्रस्य वचनान्नात्र सशय. । आचार्यत्व मया दत्त त्वयाचापि प्रदीयताम् ।। 101 ।।
सभावनार्थं विप्रस्य शृणुष्व वचनं मम । ब्राह्मण श्चाल्प सन्तोषी मम सन्तोषभूरय ।। 102 ।।
एव वृन्दावनाख्यान श्रुत्वा सुजन वृत्तय । यात्रा कुर्वन्तु मद्भक्त्या यच्छन्तु सदुपायनम् ।। 103 ।।
याचयन्तु वर तस्मात्तद्वर प्राप्नुवन्तु ते ।। 104 ।।

## 7 विप्र प्रकरणं ( $105–110\frac{1}{2}$ )

नैवेद्य मृष्टमन्न मे यावन्नक्रियते द्विज ।। 105 ।। तावत्कुरुष्व त्व नक्तव्रत निरशन मम ।
भुक्ष्व विप्र प्रसन्नोऽस्मि व्रतादनशनात्तव ।। 106 ।। व्रतेनानेन निष्पाप स्त्वमभूर्नात्र सशय ।
मम मन्त्राधिकारोऽभूत्तव पापक्षये सति ।। 107 ।। इन. पर गृहाण त्वं मनु दिव्यमनुत्तम ।
दास्यामि मम पादाब्जगति तव न सशय. ।। 108 ।। मात्यजत्व हि विप्रेन्द्र नित्य भारतकीर्तनम् ।
चामर वीजय त्व हि मम वृन्दावने सदा ।। 109 ।। आदिपर्व वदस्व त्व अनुक्रमणिका विना ।
वेदवेद्यस्य पादाब्जान्निसृत तीर्थमुत्तमम् ।। 110 ।। मम पादोदक विद्धि यतस्तद्देहगोह्यहम्
।। $110\frac{1}{2}$ ।।

## 8. वेदवेद्य प्रकरण – ( $111–118\frac{1}{2}$ )

वेदवेद्य जयस्व त्वं दुर्मत दुर्मतीरितम् ।। 111 ।। मध्वराद्धान्तोक्त पद्यैर्मत्कृताभिश्च सूक्तिभिः ।
वेदवेद्य मम वेदकोविद कोविदत्वमिह कोनरो भुवि ।। 112 ।। त्वन्मुखेन तु जयामि मायिनं
प्रीणयामि कमलापतिं हरिम् । वेदवेद्य तव वेदकोविदः कोविदत्वमिह कोनरो भुवि ।। 113 ।।
जय मदान्ध परवादिदन्तिनं सिह्मविक्रम मदीरित युक्तिभि । कुरु सुमध्व समयस्य निर्णयं
मत्प्रसाद विभवाप्त सुमत्या ।। 114 ।। तोषयस्व सुजनाश्च मायिन. खेदयस्व परमात्मभाविन. ।
शेषाद्रि पण्डितस्यापि वक्तव्यः स्वाप्न वैभव ।। 115 ।। व्यासराजाख्य भक्तस्य तथा तदनुजस्यच ।

**15. शेष प्रकरण ( 149-152 )**

शेषाशेष च मत्कार्यं शेषाशेषप्रद तव ॥ 149 ॥ अकर्तु कर्तुरप्येतत्कुरुष्व त्व सुखीभव । ममात्मजं वेदवेद्य ममसस्थान सस्थिनम् ॥ 150 ॥ मत्कला पूर्ण मनम पालयस्व सुमानिनम् । अहो ममाज्ञा कुरु वेदवेद्य ख्यानिर्मम स्वाप्नकृते नं किंचित् ॥ 151 ॥ जाता तयो. प्रेषय शक्तियुक्तयो. सीतापति व्यास सनामधेययो । श्रुत्वा तौ मत्कृतेः सम्यक् ख्याति चात्रकरिष्यत ॥ 152 ॥

**16. विप्र प्रकरणं – ( 153-153½ )**

विप्र त्वमेव गत्वाच मत्कृतिं तु तयोर्वद । नामैकदेश ग्रहणे गृहीत पूर्णमेव च ॥ 153 ॥ तयोर्नाम तथाशास्त्रे चोक्त विद्वद्भिरेवच ।

**17. लक्ष्मीपति प्रकरण – ( 154–163 )**

अस्यातिशुद्धबुद्धेश्च यस्य सद्धर्म पद्धते ॥ 154 ॥ मद्बुद्धिनिधिरत्रासीदहो विधिबल महत् । अय तु ब्राह्मणश्चात्र मामेव शरण गत ॥ 155 ॥ वृन्दावनकृते पूर्वं स्वस्याभीष्ट निवेद्य मे । कृत्वा वृन्दावन चेति प्राक् श्लोकद्वितयेन च ॥ 156 ॥ अतस्त्व मे मया प्रोक्त तत्सत्य समभूदहो । वेदवेद्य मम शेष सत्कृत तत्सगेपगिरि पण्डित वद । त्रिदशदोष रहितै. सुपूजित कदशनाथि भिरन्नादृत रुपा (प) ॥ 157 ॥ सुतमदूर्जित पदेच सुस्थिर त्वच सर्व सुरसत्तम देव भू । तद्नु(द)भय प्रभवाद कोमहान् त्वामृते पुरुषभूषण तद्वद ॥ 158 ॥ एतच्छ्लोकद्वय स्यार्थ ब्राह्मणस्य मुखेन तु । जानीहि त्व यतश्चास्य मयाऽर्थोप्यनुवर्णित ॥ 159 ॥ त्रिगच्चकविता-दोषा विदुषा ज्ञानलक्षणे । तैर्विहीनाश्च विद्वासो नेतरेति सता मतम् ॥ 160 ॥ असूया परनिन्दाच परेषां च प्रतारणम् । निर्दोषाया परकृतौ दोष दूषणमेव च ॥ 161 ॥ परत्व बुद्धि स्वस्मिंस्तु परेषा हास्यमेव च । स्वस्य शाठ्य तत्वमतावहकारित्वमेव च ॥ 162 ॥ इत्याद्या बहवो दोषा. विद्वुषाच प्रकीर्तिता । तैर्विहीनाश्च विद्वासो नेतरे च कदाचन ॥ 163 ॥ एतत्सर्व स्वाप्नपद्येन गर्व हित्वा सर्वे विप्रवर्यास्यजेन । श्रुत्वाचोर्व्या शर्व गुर्वादि देवान् दृष्ट्वोर्वशी यान्तु

मां मानवेन्द्रा॰ ॥ 164 ॥ इद वृन्दावनाख्यानं ये पठन्ति मनीषिण॰ । मुकुन्दावनमेवास्तु तेषा
कन्दाशनाज्ञया ॥ 165 ॥ इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात् । सम सहस्रशीर्षस्य सूक्तस्य
पुरुषात्कृतम् ॥ 166 ॥ यच्छृण्वता भक्तिरुदार सद्गुणे हरौ हरे लोकगते तथामयि । भवत्यहो
सर्वं शुभाप्ति सन्मतीः ददात्यजस्र सुत सत्यमेवतत् ॥ 167 ॥

ॐ इति श्री ब्राह्मण स्वाप्नवृन्दावनाख्याने वैभवपर्वणि दशमाध्यायः समाप्त ॥

**॥ श्रीकृष्णार्पणमस्तु ॥**

# अथ एकादशाध्यायः



**1. लक्ष्मीपति प्रकरणं ( 1–9 )**

हरि ॐ ।। अलौकिकाया मम सत्कृतौ च न दोषबुद्धि. कुशलैश्चकार्या । अर्थे च दृष्टि. क्रियता न शब्दे यतश्चैषा स्वाप्नकृतिर्हि वासिनी ।। 1 ।। वासनात्मक शब्दानां अर्थदर्शनमेवच । सत्य न शब्द सत्यत्वमेव हि स्वाप्ननिर्णय. ।। 2 ।। लौकिकस्यतु वाक्यस्य बुद्धिपूर्वं कृतस्यच । शब्दार्थोभय-सत्यत्व ग्राह्य मेव न सशय ।। 3 ।। पूर्वानुभव संस्कारात्तादृशार्थांस्तु पश्यति । शृणोति च तथा शब्दान् पूर्व सस्कार कारणात् ।। 4 ।। अय तु ब्राह्मण पूर्व ममशिष्य सुबुद्धिमान् । तत्सस्कार वशादेव स्वप्ने वक्ष्याम्यहं द्विजम् ।। 5 ।। अहं जानामि तत्सर्व पूर्व संस्कार कारणम् । जाति स्मरणशीलोहं हयग्रीवस्य चाज्ञया ।। 6 ।। दुर्वादिगर्वहर पुत्र सुखी भवस्व गुर्वादिराज कृपया सुमतिं भजस्व । शर्वादि देव वरवन्द्य हरि भजस्व चोर्व्या सुकीर्तिमथ मेत्रच ख्यापयस्व ।। 7 ।। इमा कृति या लिखति स्म लेखिका वाचापि पुण्य लभते न सशय । वृन्दावनालङ्करणेन धातुभि. समार्जनाभि र्बहुपुण्य भाजनी ।। 8 ।। आरार्तिकाभि र्बहु चित्रिकाभिः । सन्नामसङ्कीर्तन सस्तवैश्च उपाधिराहित्यवता सु सेवा करोति साचापि मम प्रियोऽभूत् ।। 9 ।।

**3 पुष्यनक्षत्रसञ्जात प्राप्तयतिभाव विप्रपरमगुरु प्रकरणं श्लोक :– ( 10–11 )**

मद्भागवत मुख्यास्तु त्रीन्दासाश्च सहोदरान् । मात्यज त्व हि मत्पुत्र ते वै मम प्रिया सदा ।। 10 ।।
नागशयन हनूमन्तौ तौ सदा वै मम प्रियौ । अहं जानामि तद्भक्ति नागशयन. सुबुद्धिमान् ।। 11 ।।

**3. विप्र प्रकरणं ·– ( 12–18 )**

वेदवेद्य सुबुद्धस्त्व दुर्बुद्धि दुर्धरेरिताम् । त्यजेमां सुजन श्रेष्ठ मज्जन प्राणहारिणीम् ।। 12 ।।
ममाशीर्वचनेनैव चिरजीव सुखीभव । हयास्याराधनेनैव ममानन्द प्रदोभव ।। 13 ।।
वृन्दावने दन्दशूक धारिण दास्यधारिणम् । मन्दार मालिनां शान्ति शालिन कमलात्मनः ।। 14 ।।
इतिमा विद्धि सद्बुद्धि हयग्रीव कृपोदधिम् । वेदवेद्य सदाराध्य शुद्ध मत्पट्टवर्धन ।। 15 ।।

व्यासेन सीतापतिना शेषेणापि च न श्रुतम् । तै. श्रुत चेदिद सर्व त्रैलोक्य श्रुतमेवहि (च) ।। 16 ।।
इति पूर्व मयाप्रोक्तमनुसधत्स्व बुद्धिमा (म) न् । त्रीनुद्दिश्म मया प्रोक्त त्वा विशेषान्नसंशय. ।। 17 ।।
अतस्त्रयाणा भक्ताना तेषां प्रेषय मत्कृतिम् । नैवेद्य नैवगृह्णामि तावत्पर्यन्त मेव ते ।। 18 ।।

**4. शेष प्रकरणं श्लोक** – ( 19–26 )

वृन्दावने मदनमर्दन रुद्रहृद्य सद्भि प्रवन्दित पद मदनाभिरामम् । वृन्दारकेन्द्र मरुदश सुमर्दिताङ्ग रक्षो विदार्य वरद प्रणमामि रामम् ।। 19 ।। अरस भूप चिरपट्टवर्धन परशुचापधर दुष्टमर्दन । निरशपापहर शिष्टशोधन परसुपापकरदुष्टसूदन ।। 20 ।। रथोत्सवस्य भारोऽयं तावकः पावकप्रभ । कालोऽय मम सेवाया. बालोय मम पुत्रकः ।। 21 ।। अन्तराय कृतोह्यस्य शान्तरायाश्च शत्रव. । भविष्यन्ति न सन्देहो मम विघ्नकरा.सदा ।। 22 ।। एतत्पद्यत्रय शेष वदस्व त्व च भूपते । यतस्त्व पण्डित शौण्ड. तन्मण्डन परोभव ।। 23 ।। सर्व वक्तव्यमुक्तच कृतार्थोह न सशयः । मद्वेतनेनैवतु यश्च जीवन् मन्नापधारी मदनुग्रहीच । पठेत स्वाप्नी मम सत्कृतिच नोचेददण्ड्चस्य करोमि तीव्रम् ।। 24 ।। एव मद्भक्तिमन्तश्च सर्व एव पठन्त्विमाम् । ख्याता कुर्वन्तु लोकेषु नोचेन्मद्द्रोहिणश्चते ।। 25 ।। पठता शृण्वता चापि ख्यातामुर्व्यां प्रकुर्वताम् । सर्वेष्टानि भविष्यन्ति हयग्रीवस्य चाज्ञया ।। 26 ।।

**5. विप्र प्रकरण श्लोक** (27–31)

यो मनासि तनु मर्पितवान् ममैतत् सर्व धन कनक पूर्णमथाभिषेकम् । यश्चाकरोद्विततभक्तियुताय तस्मै गत्वा वदस्व मम सत्कृतिमाशु विप्र ।। 27 ।। व्यासाय भक्तिकोशाय दासाय मम नित्यश. । वैष्णव स्नेहपाशाय तोषाय वद मत्कृतिम् ।। 28 ।। तस्यानुजस्य मयि सर्व समर्पकस्य भक्त्यादि मुख्य गुण सङ्ग्रहणस्य तस्य । पूर्व हयास्य चरण स्मरणोत्सुकोपि दुर्विप्रनिग्रहवतो वद मत्कृतिच ।। 29 ।। वेनवद्वेतनान्न च यस्य भुङ्क्ते सुदुर्मति । तस्येष्टदेवस्मरणे महत्कोपादभूदहो ।। 30 ।। इद सर्वेऽ पि जानन्ति तद्द्वेषान्नोच्यते मया । सोऽपि मत्पादमापन्न· शापभीतो न भक्तिभाक् ।। 31 ।।

### 6 सीतापति प्रकरणं – ( 32-39 )

ब्राह्मणं मानिन मान हित्वा मत्पादसेवनम् । कुर्वाणमनिश विद्वन् मात्यजस्त्वममायिनम् ॥ 32 ॥ मद्वेतनान्नं भुञ्जाना ये वै कुजनवृद्धय । तेष्वेकोऽपि तु मत्पद्य तदर्थ वा न वक्त्यहो ॥ 33 ॥ मत्कृतिं वदता पुत्र तदर्थ वदता तथा । मद्वेतना ददस्व त्वमन्यथा मा ददस्व भो ॥ 34 ॥ मद्वेतनेन शून्येऽस्मिन्विप्रे जात पराग्रह । जनेषु वक्ति मत्पदच तदर्थ मयि भक्तिमान् ॥ 35 ॥ अहं शपे सुपापिन कुपात्रसादभूद्धनम् । मयात्र जीविन बहु सुपुत्र माददस्त्वह ॥ 36 ॥ ब्राह्मणं गुणमणि शृणु पुत्र चारुवीजित सुचामरपाणिम् । पुण्य पूर्ण गुण भूषण कीर्तेरग्रजत्व मम मात्यजतूर्णम् ॥ 37 ॥ ब्राह्मणं गुणवन्त च ऋणवन्त गुणार्णवम् । जानीहि गुणिन. फणिनो वदस्वास्य च तदृ(द्र)णम् ॥ 38 ॥ ऋणान्मुक्तिश्च विप्रस्य साक्षान्मुक्तिर्नसशय: । भोज्य वित्ते प्रदत्ते हि भुक्तेर्नास्ति ततोऽधिकम् ॥ 39 ॥

### 7. पुष्यवक्षत्र सजात विप्रगुरु प्र ( 39½ )

मद्वाच नन्दन त्व हि सर्वथा मावृथा कुरु ॥ 39½ ॥

### 8. विप्र परम गुरु प्रकरण श्लोक ( 40-43½ )

मन्मठस्याधिपत्मेतु विठ्ठल पट्टवर्धन ॥ 40 ॥ स्फुट कार्यपटु मत्वा पट्टपच्छोडिका दिश । पूर्व प्रामादिकी बुद्धि स्यात्तस्य नतु साहजा ॥ 41 ॥ निर्वेदनामिदानीन्तु सप्राप्तश्च न सशय: । रथोत्सवस्य भार त धर्ता तर्ता स एव तु ॥ 42 ॥ तदन्य. को भवेत्पुत्र समर्थ: कार्यसाधने । नागशयनस्य मनस सङ्कल्प सप्रपूरय ॥ 43 ॥ अह जानामि तद्भक्ति नागशयन सुबुद्धिमान् ॥ 43½ ॥

### 9 दुष्ट पुरुष प्र श्लोक ( 44-47½ )

मद्वाक्य मान ससिद्ध सर्व सग्राह्यमेव हि ॥ 44 ॥ चोद्यानर्हेतु मद्वाक्ये चोद्य कुर्वन् पतत्यध । भावनात्मक शद्वेषु ज्ञातव्यो भाव एव च ॥ 45 ॥ अहमाविष्टवान्विप्रे कदाचिन्न कदाचन । मत्कृतौ दोषशङ्काचेद्दोषे पहिहृते सति ॥ 46 ॥ भवता मातृ दोषोऽपि स्याद्व्यभीचार शङ्कया । पातिव्रत्यान्नदोषश्चेदशरीरत्वतस्तथा ॥ 47 ॥ प्रकृतेऽपि न दोष स्या त्प्रतिबन्दी दुरुत्तरा ॥ 47½ ॥

**10. लक्ष्मीपति प्रकरणं श्लोक ( 48-58 )**

जना सुपापिन· सर्वे कलिनाविष्टचेतना. ।। 48।। कत्थन वावदूकास्ते कुर्वन्ति मम सन्निधौ । कदने चोद्यताः सर्वे वदने भस्मवासिनः ।। 49 ।। मयिजीवति सर्वेऽपि मत्प्रिया इव मत्कृतिम् । पठन्त्यर्थ वदन्त्येते मत्प्रतारण बुद्धयः ।। 50 ।। इदानी स्वाप्नपद्य मे तेष्वेकोऽपि नवक्त्यहो । अहं नैवेति दुर्बुध्या जाने सर्वमनोगतम् ।। 51 ।। यो नवक्ति च मत्पद्य तदर्थ वा मदाश्रयी । तस्याशुभ भवत्येव पश्य मे तपसः फलम् ।। 52 ।। इमा कृतिं मम स्वाप्नी आदराद्यस्तु वक्ष्यति । तस्य श्रीश. प्रसन्नः सन् शुभ दास्यत्यसंशय· ।। 53 ।। सत्य सत्यं पुन. सत्य त्रिवाचापि मयोच्यते । पठता शृण्वता चापि सर्वंसम्पद्भविष्यति ।। 54 ।। पुत्र ते सुप्रसन्नोऽस्मि मत्प्रसादाप्त सुप्रभ । मित्र ते सुप्रतापोऽय कृत्रिमो न प्रदृश्यते ।। 55 ।। हयास्य ब्रह्मणोपास्यं मयोपास्य च भूरिश । प्रसन्नास्य सदा वश्य उपास्य त्व सुखीभव ।। 56 ।। एव श्रुत्वा विर्प्रवर्यात्सुगूढमाश्चर्य भूत मम वैभव तु । पुत्रचैतत्सुप्रसिद्ध कुरु त्व मित्रौ यथैवान्धकारस्थमर्थम् ।। 57 ।। पुत्र त्वं विप्रवर्यस्य सुप्रसन्नो भव प्रभो । प्रभुत्वात्त्वत्प्रसादोऽय विप्रेस्या दैहिक प्रद. ।। 58 ।।

**11 सीतापति प्रकरण श्लोक $58\frac{1}{2}$ अज्ञान हारिण मित्यारभ्य 63 पूर्ति**

गुरुत्वात्कुरु कारुण्य विप्रस्याज्ञानहारिणम् ।। $58\frac{1}{2}$ ।। मत्पुत्रेणादरार्थोक्त मत्कृतेरर्थमञ्जसा ।। 59 ।। शृणु सीतापते भक्त्या सत्पते ते शुभाप्तये । त्वामागतमह जाने चिरादागतवानसि ।। 60 ।। करायागतवानस्मि सुरलोकात्सुपर्वसु । चिरजीव चिरजीव सुखीभव सुखीभव ।। 61 ।। ममाशीर्वच नेनैव हयग्रीव परो भव ।। 62 ।। सुतसुतत्व मत सन्मते कुत. कुमतिरत्र तव मत्प्रसादत. । वितत भक्तियुत मत्पदे सदा कृतसमस्तशुभ सत्कृते हरे ।। 63 ।।

**12. अनेक भक्त प्रकरण श्लोक (64-66)**

द्विजेति गरुडस्यापि सम्यक्सबोधना कृता । पुत्रेति नरकोत्तार हरि प्रत्युक्तवानहम् ।। 64 ।। शेषेति भूधर शेष व्यासेति व्यासमेव च । सीतापतेति रामं च भूपेति भूवराहकम् ।। 65 ।। भूपेति भूमेरुद्धार वराहचोक्तवानहम् । तस्माद्ग्राह्योभयार्थस्य (श्च) मत्कृतेरर्थबुद्धिभि· ।। 66 ।।

## 13 लक्ष्मीपति प्रकरण श्लोक ( 67–71½ )

सुत सुसूक्ष्ममतिमन् कृतकृत्यस्त्व समस्त यतिष्त्तम मूर्ते। मत्कृति वितत युक्ति सत्कृति सत्सु व्याकुरूत तत्र कीर्तये ॥ 67 ॥ पुत्र मत्पुत्रिका युक्तिमल्लिकाख्या तवानुजा। कुरू सत्पात्र दान ते कन्यादान फलं भवेत् ॥ 68 ॥ मद्युक्ति भाषणैर्भासि त्वद्व्याख्यान सुवासिनी। नानापुष्पोल्सत्केश बन्धिनी भावगन्धिनी ॥ 69 ॥ वेदवेद्य द्रौपदीव भात्यनेकवराप्यहो। तस्मात् व्याख्यान सन्मन्त्रैर्दानं कुरु वरेषुता ॥ 70 ॥ त्वमेव तत्पिता माता पितृहीना तु माकुरू। अहो ममात्मजा युक्ति मल्लिकेति (काख्या) ममात्मजम् ॥ 71 ॥ वव्रे तीव्रेण भावेनाप्यग्रज व्यग्रमानिनी ॥ 71½ ॥

## 14 विप्र प्रकरणं श्लोक ( 72–89½ )

अप्पण. कृष्ण भट्टश्च शष्पण परिकीर्तित ॥ 72 ॥ पुष्पवल्लघुबुद्धिश्च कपटी मत्पदे सदा। मत्पुत्र सुप्रसङ्गेतु स्वप्रसङ्ग करोति यः ॥ 73 ॥ तत्प्रसङ्गंत्वह सम्यक् कुप्रसङ्ग करोम्यहम्। मत्पुत्रे कृत पण्डित्ये पण्डितैर्मण्डिते सति ॥ 74 ॥ पण्डकै. क्रियते डम्भात्स्वपाण्डित्य हिडम्भ(डिम्भ) वत्। अयं तु कुमना कृष्णो ह्यप्पण. फणिबुद्धिमान् ॥ 75 ॥ शुनवत्कत्थन कुर्वन्नन्दनाग्रे मनाक्च नः। मन्नन्दन पद ध्यात्वा श्रुत्वा तस्य मुधामयीम् ॥ 76 ॥ गा त वै गोमुख व्याघ्र त्यज शीघ्र दुराग्रहम्। सोऽपि मत्पादभक्तश्चेत् हित्वा स्वकृत दुष्कृतिम् ॥ 77 ॥ मत्कृति पुत्र शिष्येषु सम्यग्व्याख्या करोत्य(त्व)हो। तदेद्वषात्तु न भाषेह शेषशायि पदे शपे ॥ 78 ॥ रागद्वेष विहीनोह हयग्रीवस्यचाज्ञया। इति पूर्वं मया प्रोक्तमनुसन्धत्स्व बुद्धिमन् ॥ 79 ॥ व्याख्यान गौरवादेव वक्ष्याम्येष सुबुद्धिमान्। नन्दनत्व तु सन्मान कुरु व्याख्यान कारिणे ॥ 80 ॥ पतन्तमम्बरात्सन्त. कुम्भिनी प्रति शम्भुना। कुम्भराक्षस भङ्गे तु दृष्ट्वा च स्तम्भितो मया ॥ 81 ॥ ध्वजस्तम्भो द्विचश्रेष्ठ भुजस्तम्भे धृतो मया। सुजनान् भजकान् त्रिष्णून्सव. पातु ममात्मजान् ॥ 82 ॥ कुञ्जरायुत सत्वोह कञ्जनाभप्रियेच्छया। मञ्जुमत्पाणिना धर्ता कञ्जलोचन सन्निधौ ॥ 83 ॥ अधस्तादुपविष्टोहमिति मा चिन्तय द्विज। त्वदन्तर्यामिणं मामप्यधस्थं विद्धि बुद्धिमन् ॥ 84 ॥ मत्कृतश्चात्र सन्मानो वाङ्मात्रेण कृतोऽभवत्। पच्छोडिकाऽपि नो दत्ता तव विप्र ममाग्रत ॥ 85 ॥

ऋणान्निष्कृतिमप्याशु न कृता तव शोभन । भोज्य वित्त प्रदत्वातु ऋणान्मुक्त. शनै. शनै ॥ 86 ॥ भोजनार्थ मधुकरवृत्ति कुरु यथा पुरा । मत्कृतिश्चाप्यश्मगता नकृता पश्य तन्मते ॥ 87 ॥ तस्मात्तवैहिका भावेप्यमुत्रार्थो भविष्यति । मत्प्रसादान्न सन्देहो विश्वास कुरु सर्वथा ॥ 88 ॥ ऐहिकोपि यथा काले किञ्चित् किञ्चित् भविष्यति । श्रीशप्रसादादावासोप्यत्रापि तु भविष्यति ॥ 89 ॥ अह तु गत्वा चा यास्ये चिरजीव सुखीभव ॥ $89\frac{1}{2}$ ॥

**15. वेदनिधि प्रकरण** – ( 90–95 )

द्विज समाजनत सज्जन प्रिय कुजन भर्जन ममात्मज भोज । द्विजवरस्य ऋणजा सुरुज वै सुजन श्रेष्ठ हर मज्जनैर्द्विजै. ॥ 90 ॥ वेदान्तवेद्य मम सान्द्रदयानिधेऽद्य त्व वेदवेद्य पद पद्य सुधा रसाब्धौ । धीमन्दरेण मथिते सति भाव चिन्तारत्न गृहीष्व तव भाग दशोत्तराच्च ॥ 91 ॥ वेदान्तवेद्य सुजनाब्धि सुपुर्णचन्द्र त्व कुण्ड मण्डल सुदर्शनतो भवाद्य । त्वं वेदवेद्य कुमुदस्य प्रमोदकारी मत्पट्ट दिव्य सरसी तटजस्य कामम् ॥ 92 ॥ त्वा वेदवेद्य मपि वां सहितौ च दृष्ट्वा सन्तोष सन्ततिर-भून्ममज्येष्ठ पुत्र । पूर्वं यथा च सुरवर्य रघुप्रवीर तस्यानुज दशरथस्य बभूव मोदः ॥ 93 ॥ रथो-त्सवस्य विघ्नानि यानि कानिचिदप्यहो । स्तम्भप्रपातनादीनि तानि वारितवानहम् ॥ 94 ॥ मद्भयात्क्रुद्ध विघ्नानां पुनरुद्धरण बुध । नैवेति सुमनो ज्ञोह क्लीबशद्ब प्रयुक्तवान् ॥ 95 ॥ एतत्सर्वं स्वाप्नपद्येन गर्वं हित्वा सर्वे विप्रवर्यास्यजेन । श्रुत्वा चोर्व्यां शर्वं गुर्वादि देवान् दृष्ट्वोर्वशी यान्तु मां मातवेन्द्रा. ॥ 96 ॥ इद वृन्दावनाख्यानं ये पठन्ति मनीषिण. । मुकुन्दावनमेवास्तु तेषा कन्दाशनाज्ञया ॥ 97 ॥ इदमर्पितमेवास्तु हयशीर्षस्य पार्षदात् । सम सहस्रशीर्षस्य सूक्तस्य पुरुषात्कृतम् ॥ 98 ॥ यच्छृण्वता भक्तिरुदार सद्गुणे हरौ हरे र्लोकगते तथा मयि । भवत्यहो सर्वशुभाप्ति सन्मती र्ददात्यजस्रं सुत सत्यमेवतत् ॥ 99 ॥

ॐ इति श्रीस्वाप्नवृन्दावनाख्याने वैभवपर्वणि अलौकिक विभागे एकादशोऽध्याय. समाप्तः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

# अथ द्वादशाध्यायः

## 1 विप्र प्रकरणं ( 1–2 )

हरिःओ । मत्प्रसादाच्च भूपेन शिबिकारोहणम् कृतम् । तव विप्र न सन्देहश्चेत् सर्व हि निदर्शनम् ॥ 1 ॥ मत्प्रसादाच्च शेषेण कृतो यत्न स्तवाप्तये । वृत्तें नं चान्यथा विप्र चिन्तय त्व सुखीभव ॥ 2 ॥

## 2 बहु भक्त प्रकरण (3-5)

मद्त्ताचार्य नाम्ना तु य कश्चिद्वा नराधम । ब्राह्मण न मणत्यन्त्यः कुणपेन किमन्तरम् ॥ 3 ॥
वृन्दावन पदोपेत तन्नाम्नैवाह्वय त्विमम् । ये चेम न मणन्त्यन्त्या. ते च मद्द्रोहिण सदा ॥ 4 ॥
लक्ष्मीपति सूभ्ममति श्लक्ष्णवाक् मत्कटाक्षत । भोक्ष्यतीक्षाफल सूक्ष्म मत्कृति वक्ष्यतुत्विमाम् ॥ 5 ॥

## 3 लक्ष्मीपति प्रकरण – ( 6–9½ )

लक्ष्मीपते सूक्ष्ममते मत्कथामृत वारिणा । सतामाध्यात्मिकाद्यग्नि शमय त्व सुखीभव ॥ 6 ॥ अहो
ममात्मजा युक्तिमल्लिकाख्या ममात्मजम् । वत्रे तीव्रेण बोधेनाप्यग्रज व्यग्रभामिनी ॥ 7 ॥ अग्र-
जाद्रमणी भूत्वा जातासा भावगर्भिणी । सुषाव पुत्र भावाख्य विदुषा तु मत तथा ॥ 8 ॥ अथापि
दोषशून्या ऽभून्निःसगस्यात्मजा यत । यां तु श्रुत्वा तु सत्सङ्गी नि सङ्गो जायते पुमान् ॥ 9 ॥
तस्मान्नि सङ्गतावाप्तौ तत्सङ्गाच्छृणुयादिमाम् ॥ 9½ ॥

## 4. विप्र प्रकरण (10–10½)

कोवा त्वयि दयाशीलो वर्तते मत्सुतोपम ॥ 10 ॥ ऋणमोचयितार ते मत्पुत्र शरण व्रज ॥ 10½ ॥

## 5. सीतापति प्रकरण (11–16)

यश्चाक्षेप करोत्यत्र मत्कृतौ दोष शङ्कया ॥ 11 ॥ तत्प्राणस्यैवचाक्षेप मुख्यप्राण करोत्यहो ।
सत्यं सत्य पुन सत्य त्रिवाचापि मयोच्यते ॥ 12 ॥ विप्रान्तर्यामिणाचेय सत्कृतिश्च मयाकृता ।

अयं तु ब्राह्मण श्रीमानापणे चाति पापिना ॥ 13 ॥ आतपे स्थापित. कामं देवरेण वणिग्भृता । द्विजान्तर्यामिण मामप्यातपस्थ चकार सः ॥ 14 ॥ पुत्र त्व शीघ्रतस्त स्मादृणान्मोचय मारणात् । पुत्र मद्वचन सत्यमेक कुरु च कीर्तये ॥ 15 ॥ अह् दास्यामि मद्दास्यं शश्वदृणविमोचने । विप्राय प्राप्त कामाय निर्विघ्न कुरु तत्र च ॥ 16 ॥

6 **विप्र प्रकरणं** ( 17-21½ )

मत्कार्यमपि भूदेव किञ्चिदप्यतिलङ्घितुम् । न शक्यं न कृतं तच्च तव कार्येतु कि पुन ॥ 17 ॥ इत परं तु मत्कार्यं तव वा विप्रवर्य यत् । न वक्ष्ये कुर्विति व्यर्थं दैन्य मम न रोचते ॥ 18 ॥ तव कार्यन्तु विप्रेश प्रागेवोक्त मयानघ । भोज्य वित्तं प्रदत्वातु ऋणान्मुक्त शनै. शनै ॥ 19 ॥ इति पूर्वं मया प्रोक्त मनुसधत्स्व बुद्धिमन् । सत्पात्रे दानशीलस्य मत्पात्रे चान्नदो द्विज ॥ 20 ॥ मत्करेचोदक दत्वा सत्कर प्राप्नुयादिह । ऋणमोचयिता ते च मरण नैति शीघ्रत ॥ 21 ॥ शरण व्रज मत्पुत्र करुणाकर मञ्जसा ॥ 21½ ॥

7. **सीतापति प्रकरण** ( 22-27 )

विप्रस्य पुत्र लाभोय भवतीति मयोदितम् ॥ 22 ॥ तत्सत्य समभूत्पुत्र कुत्र ते सशयो वद । एव मयोदितं सर्व मैहिका मुष्मिक च यत् ॥ 23 ॥ तत्सत्य नात्र सन्देहो विश्वास कुरु सर्वदा । सुजनाम्भोज तेजस्विन् कुचनाम्बुज राज ते ॥ 24 ॥ स्वजने चास्तु सौजन्य द्विजराज च सर्वदा । एव मदीरिता कीर्तिमार्तिनाशकरी पराम् ॥ 25 ॥ आदाय ते चानन्दाय चानन्दी भव नन्दन हरौ कुरु गुरौ भक्तिभार धीर परात्परे ॥ 26 ॥ घोर ससार पार त्व तितीर्षु रत्नेत्कराकरे । कुजन त्यज दुर्बुद्धि भुजगतु जनो यथा ॥ 27 ॥

8 **विप्र प्रकरणं** ( 28-30½ )

मया यदुच्यते तद्धै हित्वा चान्यत्त्वयोच्यते । कषणापाटवं विप्र मरणार्ति समं तव ॥ 28 ॥ गुणा धमानिति प्रोक्ते बलाधिकाानिति त्वया । प्रोच्यते विप्रवर्येह तव मौढचमहो बत ॥ 29 ॥ स्वप्न सत्यत्ववादेन जेतुमिच्छन्ति वादिनम् । ये तत्व वादिन. सर्वे त्वङ्गी कुर्वन्तु मत्कृतिम् ॥ 30 ॥

## 9. शेष प्रकरण ( 31-42 )

हे पुत्र विप्र वर्योय कुत्र यास्यति मत्प्रिय. । सत्रार्थ तव सत्पात्र सकलत्रः सपुत्रकः ॥ 31 ॥ श्रोत्रियः शास्त्र वेत्ताच कृपापात्रो ममात्रतु । गात्रे ऽकृशतर. पुत्र कुत्र यात्रां करिष्यति ॥ 32 ॥ भोज्य वित्त ऋणान्मुक्त्यै दत्तवान्मम वाक्यत. । भोजनार्थं तु किञ्चिद्वा नास्ति चास्मै दयां कुरु ॥ 33 ॥ मच्छिष्यैर्दापय त्वं वा पुत्र किञ्चिद्ददस्वह । मद्वाचं नन्दन त्व हि सर्वथा मा वृथा कुरु ॥ 34 ॥ किमत्र बहुनोक्तेन ममैकोक्ति. शतोक्तिका । तस्माद्दापय मच्छिष्यै मंदाज्ञेति निवेद्य तान् ॥ 35 ॥ इद तु सर्व वृत्तान्तं वद सीतापतेः सुत । श्रुत्वा सन्तोषवन्तश्च तं विना वद तान्मुने ॥ 36 ॥ मात्रा विहीन पित्रा च भ्रात्रा मित्रात्तथैव च । मामत्राश्रितवान्विप्रः सत्पात्र किमत. परम् ॥ 37 ॥ स्वामिन्वेन सखित्वेन बन्धुत्वेन सुहृत्त्वत. । मामत्राश्रितवान्विप्र. सत्पात्रं किमत परम् ॥ 38 ॥ किमत्र बहुनोक्तेन विप्रे मत्प्रीतिरञ्जसा । जायते त्रायते कामं कियज्जन्म ऋण मुने ॥ 39 ॥ वृद्ध. शुद्ध सदा भक्तिबद्ध. सद्धर्मपद्धतिः । श्रद्धा समुद्धतो विद्वन्धत्ते मद्बुद्धि बन्धित. ॥ 40 ॥ शरणागत विप्र त करुणाकर मञ्जसा । मरणार्ति हरिष्यामि परिणाम गतेप्यहो ॥ 41 ॥ तस्मात्पुत्र गति का वा मयात्यक्ते द्विजोत्तमे । त्वमप्यमु ममावासं मानयस्व सुवाससा ॥ 42 ॥

## 10 विप्र प्रकरण श्लोक – ( 43-51 )

शश्वद्विस्मृति शीलस्य कस्मृतौ विस्मृति र्भवेत् । आमूर्तिं तव विप्रेन्द्र कामर्ति त्यज मा भज ॥ 43 ॥ विप्र नन्दन मन्य वा धनिन मनसापि वा। कार्पण्य न वदस्व त्वं शरणं व्रज मा मुनिम् । ॥ 44 ॥ कार्पण्य तव विप्रेश मम सन्तोष कारणम् त्वदन्तर्यामिणो विद्वन्न भवेत्पुण्य मूर्तिन ॥ 45 ॥ यावदीश्वर दत्त वा वित्त गृह्णीष्व पोषणम् । कुरु पुत्र कलत्रादि मित्राणा सत्र कर्मणि ॥ 46 ॥ अन्ते सुत्राम लोकोय कान्तस्तव भविष्यति । शान्तिस्तव भवेद्विद्वन् मा तात शरण व्रज ॥ 47 ॥ मन्नन्दन पदं धन्य धनधान्यादिक दिने । दिने ममेति जानीहि कानीतिर्नोच्यतं मया ॥ 48 ॥ मातृत्वेन पितृत्वेन भ्रातृत्वेन च मित्रत । त्रातुर्मे पुत्रता प्राप्त. सत्पात्र किमतः परम्

।। 49 ।। तस्माच्छरण्य शरणमरण शरणार्थिनाम् । भरण मम मन्त्रेण गुणिन व्रज ब्राह्मण
।। 50 ।। एव मद्बुद्धि बद्धस्त्व शुद्ध सद्धर्म पद्धतिम् । मुग्ध बुद्धि विना श्रद्धा समिद्धो बुद्धिगां कुरु
।। 51 ।।

## 11 सीतापति प्रकरणं (52–53 )

मात्यजस्त्व ममावास कमावश्यन्तु यास्यति । हित्वैन तत्व वेत्तार मत्तोन्मत्त त्वित: परम् ।। 52 ।।
मम मूर्तिघर कीर्ति ख्यापयन्तं सतामिह । आर्तिनाशकरी सार्थी कुरु देह तु मा त्यज ।। 53 ।।

## 12 लक्ष्मीपति प्रकरणं :– ( 54–62 )

शब्द जालानि मद्बुद्धि लीलानीति भयाच्चमा । नमन्ति तावकानीति संस्तब्धा मुग्धकानि च ।। 54 ।।
प्रकृति प्रत्ययौ मह्यं स्वकृतौ सत्य मूर्तिनौ । साचिव्य कुरुत सम्यग्व्यवहर्तु परान्प्रति ।। 55 ।।
तस्माच्छब्दस्य दोषोय नास्ति न शाब्दिकोत्तम । सास्ति निर्दोषता कात्र दोष (षि) ता मुनि भूषण ।
।। 56 ।। यत्र प्रतीतार्थ बाधस्तत्रातर्यामि सग्रह: । कर्तव्य सतत विष्णु स्मर्तव्य: सोऽपि मत्कृतौ
।। 57 ।। अह द्विजस्य सत्तेज. कारयिष्ये स्वशिष्यकै. । यथाऽमुत्रापि कामैश्च तथात्रापि सुमानवै:
।। 58 ।। यदिवानैव कुर्वन्ति तर्हि सर्व यश श्रिय: । आयुष्य च हरिष्यामि पश्यन्तु तपसो बलम्
।। 59 ।। लक्ष्मीपते च गत्वा त्व सौक्ष्मी वार्ता वदस्व मे । मत्पुत्र तत्र चात्यात्प नाम्ना सीतापतिं
मतम् ।। 60 ।। नोचेत्तवापि दण्डश्च भवेन्मन्मण्डन बिना । पुण्डरीकाक्ष भञ्जिष्ठा: भाण्डीकृत (रक)
गतिर्यथा ।। 61 ।। विप्र. स्वार्थ वदत्येव तेज. श्लोक स्वकल्पितम् । इति जानन्ति मां मर्त्या:
स्मर्तव्या नैव ते मम ।। 62 ।।

## 13. विप्र प्रकरणं – ( 63–66 )

विप्रत्वं लज्जया युक्तो मज्जात न वदे: कुत. । कुब्जापते प्रिय भक्तं सज्ज्ञान मतिप्रयेरतम् ।। 63 ।।
लक्ष्मीपतिश्च मद्भक्तो वक्ष्यत्येव मदाज्ञया । त्वच तूष्णीच तिष्ठस्व मत्पाद स्मरणे रतन् ।। 64 ।।

तेजसा मे जिता लोका को जितो न भवेदिह । ऊर्जिताभयसो मह्यं पूजिताश्च नमन्त्यहो ॥ 65 ॥
इति मत्वातु ता कीर्तिमार्ति नाशकरी तव । सार्थीकुरु ममाज्ञा ता कार्तिस्तव भविष्यति ॥ 66 ॥

## 14 लक्ष्मीपति प्रकरण ( 67–70 )

विप्रश्च मनसा वाचा कर्मणावा गुणार्णव । न काड्क्षतिस्म सुक्षीणोप्यत्यन्ताशावशो न हि ॥ 67 ॥
तस्मात्त्वमेव सन्मान ममैवेति कुरुष्व तम् । तवैव प्रीतिरत्यन्त ममैव च भविष्यति ॥ 68 ॥
मन्दस्मित घर सान्द्रानन्द सन्दोह मन्दिरम् । शतानन्द गुरु सान्द्र हयसत्कन्धर स्मर ॥ 69 ॥
लक्ष्मीपते तव सुतं मम नामयुक्त कृत्वा करोषि वितता रतिमेव चात्र । सीतापति मयि सुभक्तिमतां
प्रशस्त मत्पुत्रमप्यभिमत वदमन्निरूपम् ॥ 70 ॥

## 15. विप्र प्रकरणं श्लोक ( 71-80½ )

तव नन्दन कर्णस्य स्वर्णयुक्तश्च सन्मणि । ब्राह्मणेक्षणगश्चासीज्जनानां नयन विना ॥ 71 ॥
तच्चापि मत्प्रयत्नेन चासीत्काक्षित मीक्षया । भोक्ष्यतीक्षाफल सूक्ष्म तत्प्रत्यक्षमभूत्तव ॥ 72 ॥
दक्ष प्रत्यक्षमित्युक्ते तत्समक्षमिति त्वया । लक्ष्मीपति समुद्दिश्य तत्पक्षी कृत मक्षत ॥ 73 ॥
विचार्यैव वदस्व त्व तवाचार्यत्व मञ्जसा । ममाचार्य मत पृच्छ किमाचार्यत्व सत्फलम् ॥ 74 ॥
अच्युत स्मर विप्रेश कश्चुर्ति न त्यजेदिह । स्वच्छमूर्तिस्मृते विद्वन् पृच्छ मामेव त प्रभुम् ॥ 75 ॥
इद वृन्दाववाख्यान मम वृन्दावने सदा । सद्वृन्दाना वदस्व त्व मद्वृन्दावन वैभवम् ॥ 76 ॥
अह प्रत्यक्षतश्चापि वक्ष्ये सूक्ष्ममते सुन । को दक्षश्चमृषा द्रष्टु मत्तेज साक्षिगोचरम् ॥ 77 ॥
विप्र प्रत्यक्ष मेवैतत्सर्व प्रत्यक्ष मेव च । प्रत्यक्ष सिद्ध प्रत्यक्ष ग्राह्य ते साक्षिण विना ॥ 78 ॥
तत्प्रत्यक्षेपि प्रत्यक्षान्तर काड्क्षा भवेदिह । तत्प्रत्यक्षेपि प्रत्यक्षान्तर बुद्धिश्च जायते ॥ 79 ॥
एव चेदनबस्थास्यात् काप्यवस्था व्यवस्थिता । न जायते प्रजानां तु जाने कुब्जापते प्रियम् ॥ 80 ॥
त्वां तु मां तात बुद्धात्व सत्रकर्म सदाकुरु ॥ 80½ ॥

### 16. लक्ष्मीपती प्रकरणं ( 81–94 )

अहं विमान मारुह्य चामानव समन्वित. ।। 81 ।। कुमानवगति हित्वा सुमानव समीपगः । ततो ऽ वरुह्य तस्मात्तु तमुह्य ब्राह्मणोत्तमम् ।। 82 ।। तत्कर्णे स्वर्ण सङ्कीर्णाभरणे वच्मि विविच्य ताम् । श्लोकान्वै पञ्चवा सप्त नववा दशवा ऽष्टवा ।। 83 ।। त्रीन्वैक पञ्च दश च द्वादशादि क्रमादिह । ततो ऽन्तर्धानमासाद्य सीमाद्यन्त गतोस्म्यहम् ।। 84 ।। स्वर्गादि भर्ग लोकानां गर्गादि मुनिभि सह । पूर्व मद्धृतस्रगध शुद्धगन्धच जिघ्रति ।। 85 ।। श्रद्धासमिद्धसद्बुद्धौ धैर्याद्धत्ते मदीरितम् । एव स्वप्न क्रम विप्रे मानिन् जानीहि त्व सदा ।। 86 ।। कानीह सुकृतान्यस्य त्व तु मानादिकान् कुरु । श्री मद्वागीश सञ्जात वादिराजाख्य सन्मुनेः ।। 87 ।। गतिर्न जाता चात्रैव भ्रमते भ्रमते ऽनिशम् । इति जानन्ति ये मर्त्या. पतिता नात्र सशय ।। 88 ।। पतन्ति पितृभि सार्धं वितते नरके सुत । सवै महानुभावश्च मोदते विष्णु मन्दिरे ।। 89 ।। इति जानन्ति ये मर्त्या अप्य मर्त्यत्व गामिन । मोदन्ते दिव्य लोकेषु नाकादिषु न सशय ।। 90 ।। एव शश्वत्सुप्रसन्नोऽस्मि पूत्र सत्प्रेक्षा ते जायते कात्र शङ्का । मत्प्रेक्षणात् प्राणनाथ प्रियेऽस्मिन् कृष्णे भक्ति कुरु मन्त्रेण पुष्णन् ।। 91 ।। हे पुत्र तव पापानि चापानीव नमन्ति च । दिने दिने कलावृद्धिर्वदने मदनं विना ।। 92 ।। जायते काम (य) तश्चापि मापतेत्त्वायतेक्षण । तव पापानि कर्माणि वर्माणि धृतवानसि ।। 93 ।। मत्कृपा पात्र रुपाणि वैरिणा मारकाणि च । तस्मात्तव न भीतिर्वा चामवानास्ति पार्थिवात् ।। 94 ।।

### 17. विप्र प्रकरण श्लोक पार्थिवा दित्यारभ्य – ( 95–107 )

मानं वै जायते कामं मानि स्तव न चान्यथा । तस्मान्मम पदे नित्य भक्ति कुरु सुतोत्तम ।। 95 ।।
वितता कीर्ति माप्नोति सतत च भवानिति । वादिराजाग्रत. क्षुद्र राज कार्य कुतस्तव ।। 96 ।।
वादीभ मृग राजोह वादिराजो हरिं भजे । राज्ञा कार्येण मे कृत्य प्राज्ञ किं वद मद्विधे ।। 97 ।।
ईश्वरस्यैव सङ्कल्पो यथा चास्ति तथा भवेत् ।। 98 ।। तस्माल्लोकस्य वार्तां मां न श्रृणुष्वाद्य गच्छतु । राज्ञा पापात्मना वार्ता सतामार्तिप्रदा ध्रुवम् ।। 99 ।। तस्मात्त्व ब्राह्मण श्रीमन् वद

मद्गुण वैभवम् । वक्ष्यामि गुण सम्भूति शृणुत्व गुणिना वर ।। 100 ।। पुन पुन प्रवक्ष्येऽहं तद्गुणौधानपि द्विज ।। 101 ।। शनैः शनै. शृणुत्व हि मदन्तर्यामिणो हरेः । अथापि न प्रवक्ष्यामि ह्यविश्वासात्मन. कले. ।। 102 ।। मिथ्यामति स्वरुपत्वात्तन्नैवेति प्रवक्ष्यत. । (त्तेनेवेति प्रवक्ष्यति इति वृ पाठ.) का पुरुष हृन्यध्यस्थ. कोप एव भविष्यति ।। 103 ।। शाप तदा प्रदास्यामि पाप पुरुष रुपिणः । एव सर्व जगन्नष्टं कष्टात्कष्ट च यास्यति ।। 104 ।। स्पष्टा त्स्पष्टतम लोक नारक याति दारक । तस्मात्कलियुगे घोरे सौरे लोंकं तु यास्यत. ।। 105 ।। पास्यतो दु ख रुपाणि नीराणीति च तान्प्रति । न वक्ष्ये सूक्ष्म वृत्तान्त ध्वाड्क्ष वृत्ति च काड्क्षत ।। 106 ।। साक्षि सिद्धं तु प्रत्यक्षा योग्य काड्क्ष्ति मीक्षया । वक्तव्यमेव वक्ष्यामि नावक्तव्य कदाचन ।। 107 ।। एतत्सर्व स्वाप्न पद्येन गर्त हित्वा सर्वे विप्रवर्यास्यजेन । श्रुत्वा चोर्व्यां शर्व गुर्वादि देवान्दृष्ट्वोर्वशी यान्तु मां मानवेन्द्रा ।। 108 ।। इद वृन्दावनाख्यानं ये पठन्ति मनीषिणः । मुकुन्दावन मेवास्तु तेषा कन्दाशनाज्ञया ।। 109 ।। इदमर्पित मेवास्तु हयशीर्षस्य पार्षदात् । समं सहस्रशीर्षस्य सूक्तस्य पुरुषात्कृतम्।। 110 ।। यच्छृण्वतां भक्तिरुदार सद्गुणे हरौ हरे लोंकगते तथामयि । भवत्यहो सर्व शुभाप्ति सन्मती. ददात्यजस्र सुत सत्यमेवतत् ।। 111 ।।

ॐ इति श्री ब्राह्मण स्वाप्न वृन्दावनाख्याने अलौकिक विभागे निदर्शन पर्वणि द्वादशोऽध्यायः सम्पूर्ण ।।

।। श्रीकृष्णार्पणमस्तु ।।

# अथ त्रयोदशाध्यायः

**1 विप्र प्रकरणं श्लोक** '– ( 1–32 )

हृरि. ओ । वादिराजाख्य भट्टंतु स्पष्ट वद सुतुष्टिद । पुष्टगात्रच मद्दत्तात्मुष्टु पाटव सयुतम् ॥ 1 ॥
काष्ठ भारस्य चोद्धारे कष्टात्कष्ट कृतिं शठम् । पट्टवर्धन शुण्ठाग्र्च मत्कृति च पठेति तम् ॥ 2 ॥
एतत्पद्यत्रय विद्वन् वदस्वाद्य सदा बुधम् । वेदवेद्य सदाराध्य शुद्ध मत्पट्ट वर्धन ॥ 3 ॥
अह पालितवानेतद्दिन पर्यन्तमेव च । इदानी तु हरिष्यामि तद्धन मान वर्धनम् ॥ 4 ॥
पुत्र पुत्र तवार्याणां बुद्धिरेव विवर्धने । तत्र तत्र च मत्कार्य शुद्ध बुद्धिगत कुरु ॥ 5 ॥
वृद्ध बुद्धिमता श्रेष्ठ बद्ध भक्तिच मत्पदे । शुद्ध क्रुद्ध तु दारिद्र्यात् दारादिषु च मात्यज ॥ 6 ॥
एव नीतिं मया नीता सिता मा तात ता त्यज । त्राताह त्वा सदा कान्त मा तातं शरण व्रज ॥ 7 ॥
मनुष्याधम ते शङ्का सु नि शेषा त्यजस्व च । भविष्यस्यन्यथा प्रेत त्व नशिष्यसि सर्वथा ॥ 8 ॥
कुमति त्यज जीवत्वं सुमतिं भज सर्वथा । सत्कुरु द्विज वाक्यं च तत्कुरुष्व मयोदितम् ॥ 9 ॥
अन्यथा नरकं यासि सुर कम्पित देहवान् । ककचैर्दार्यसे त्वं हि सुकृतै र्हीनितां व्रजे' ॥ 10 ॥
जीव जीव कुतो यासि नरक नरकम्पनम् । जीव जीव हरेर्भक्त्या इहैव शरदां शतम ॥ 11 ॥
जीव जीव गुरौ भक्त्या मयि कारुण्य विग्रहे । जीव जीव स्वपुण्येन कर्मणा शरदा शतं ॥ 12 ॥
मनुष्याधम ते वाचात्वाचार्योय न भीति युक् । स्वचारित्र च मे सर्वं विचार्यैव वदिष्यति ॥ 13 ॥
तस्माच्छृणोषि चेद्वृत्तशृणुष्व त्व द्विजोत्तम । नोचेद्गच्छस्वदूर तु दारुणं नरकं तथा ॥ 14 ॥ स्वर्ग
वै गन्तु काम श्चेद्धर्गलोक सुखोत्कटम् । निर्गतो न भवस्व त्वं सर्गान्मद्वचनस्य तु ॥ 15 ॥ परलोक
प्रवृत्तेश्च प्रवक्तृत्वे प्रभोर्मम । प्रभुत्व चास्य मे दत्त विप्रस्याशु प्रगृह्त ॥ 16 ॥ तस्माद्द्विजेन
सुजनै प्रजाना हित काम्यया । समाजे सज्जनाना च श्रोतव्यं निजमीप्सुभिः ॥ 17 ॥ हे जीव जीव
सकलेश्वर जीवभेद जानीहि जीवगत मेव जनेषु धीमन् । को मानवस्तव समान सुमानवेषो
ज्ञानादि गूहन परी न मनोनुसारी ॥ 18 ॥ अह ज्ञानिप्रियोनित्य ज्ञानिनोपि ( हि ) मम प्रिया' ।
नैवाज्ञानी मानयुक्त श्वानयोनि शतं व्रजेत् ॥ 19 ॥ मम नन्दन विज्ञान भानु तेजो निभं शुभम् ।

शृणु मोहन मत्पुण्य कारण कुज नान्यथा ॥ 20 ॥ प्रत्यक्ष सिद्धमेतद्धि तेजसा च प्रकाश्यते । स्थूल प्रकाशक सूक्ष्मं न तु तेजः प्रकाशकम् ॥ 21 ॥ दूरस्थ पुरुषस्यापि ज्ञान सूक्ष्म प्रकाशकम् । क्वाचित्क तेजस. साह्य बाह्य साधन मेवहि ॥ 22 ॥ आन्तरतु तमः कान्त ज्ञान तु हरतेऽनिशम् । ज्ञान मानेन नानीत हीन विषयमानिनम् ॥ 23 ॥ श्वान रूप मुनि चापि कुरुते च निवर्तनम् । ज्ञान तु मौनिना मुख्य कानने वासिना मुने ॥ 24 ॥ श्वान जन्मानि दूराणि स्वय नित्य करोतिच । तस्मात् ज्ञानी सदा पूज्य पूज्यात् पूज्यतम. स्मृत ॥ 25 ॥ अह ज्ञानिप्रियो नित्य ज्ञानिनोऽपि मम प्रिया. । नैवाज्ञानी मानयुक्त श्वानयोनि शतं व्रजेत् ॥ 26 ॥ ममोपदेश वाक्यानि श्वासमात्रावशेषिता. । श्रुत्वा खा ( श्वा ) सादि दोषैश्च मुञ्चन्ते नात्र सशय ॥ 27 ॥ ममोपदेश वाक्यानि सर्वाभीष्ट प्रदानि च । श्वानादि हीनजन्मानि निराकुर्वन्ति नान्यथा ॥ 28 ॥ हे पुत्र वृत्त श्लोकानामन्ते योज्य फलश्रुतीन् । श्लोकान्वै शोक विच्छेद कुर्वत· सार्थकान्कुरु ॥ 29 ॥ ब्राह्मणाशनचिन्ता मा साम्प्रणी तव द्रक्ष्यति । का मणि मा भजत्व मत्पुत्र चिन्तामणि भज ॥ 30 ॥ अष्टाध्यायान् कुरु स्पष्ट शिष्ठ काठिण्य वर्जितान् । पुष्टार्थानर्थिनोऽभीष्ट ददतः पठतोऽनिशम् ॥ 31 ॥ ये विष्णु भक्ताः कृत कौतुकाः सदा सीतापति व्यास सुतादयो मम । भक्ताश्च सर्वेऽपि सुतत्व वादिनामङ्गीकृता मत्कृतिरस्तु सर्वदा ॥ 32 ॥

## 2. लक्ष्मीपति प्रकरण श्लोक ( 33–40½ )

इति श्रीत्यादि वाक्यानि मयानुक्तान्यपि प्रिय । प्रत्यध्याये त्वया चान्ते प्रयोक्तव्यानि चाज्ञया ॥ 33 ॥
समाप्याख्यान मेतद्वै मद्वृन्दावन नामकम् । सद्वृन्दाना च मध्ये चानन्दी कुरु द्विजोत्तमम् ॥ 34 ॥
आचार्य शब्द प्रवृतौ निमित्त चास्ति ब्राह्मणे । ममापूर्व गुणानाच प्रवक्तृत्व दिने दिने ॥ 35 ॥
श्रोत्रियः शास्त्र वेत्ताच कृप.पात्रो ममात्रतु । सत्पात्रत्वे मया प्रोक्त तदपि ग्राह्य मेव हि ॥ 36 ॥
सुक्षीणं ब्राह्मणं विद्वन् गुणिन फणिन भण । नन्दन शृणु मे वाणी गुण भूषण कारण ॥ 37 ॥
ममाज्ञाधारणेशानं मम प्राण भणाधुना । चिन्तामणे दरिद्राणा प्राणिना प्राण भषण ॥ 38 ॥
शक्तः कस्त्वद्गुणमणीन् वर्णितु भण मा विना । शिष्यस्य गुण सम्भूति वर्णने गुण भूषण ॥ 39 ॥

गुणज्ञ· प्राण ते काणो ह्यक्षीणा मनुते नु किम् । तस्मात्वद्गुण सम्भूति महमेव मुनीश्वर ।। 40 ।। जानामि मानव चान्य न पश्यामि सुमानव ।। $40\frac{1}{2}$ ।।

## 3 विप्र प्रकरण श्लोक ( 41–48 )

ससार क्लेशतस्तोक श्लोकं त्व त्यक्तवानसि ।। 41 ।। एकं ते शोकहर्ता को मा विना कोविदो वद । " दक्षिणे कर्णरन्ध्रे च तन्द्रीनस्याद्यथा तव ।। 42 ।। मन्द्र मध्यम तारैश्च सध्रीयन्ते वचासिन. " । इत्येक श्लोक मुख्य मे पुनर्वच्मि शुके यथा ।। 43 ।। पाके शासन लोक च पुनर्यामि यथागमम् । यत्कर्णे कामणि त्वं हि घृतवानसि ब्राह्मण ।। 44 ।। तत्कर्णे दक्षिणे स्वच्छ मणि त्व घृतवानसि । पश्य सामर्थ्यमेतन्मे विपरीत तवाधुना ।। 45 ।। कर्णस्याभरण विप्र शृणु मे वचनत्वहो । कुतो दक्षिण मत्कर्णे कार्मणिः कुणपोत्तम ।। 46 ।। वामकर्णे धरस्व त्व कामणि ब्राह्मणोत्तम । ममोपदेश कर्णेतु सन्मणि त्व तु मात्यज ।। 47 ।। अह शत सहस्र वाप्ययुत नियुत तथा । लक्षं लक्षण सम्पन्न वक्ष्ये शिक्षन् जनान् क्षणात् ।। 48 ।।

## 10. लक्ष्मीपति प्रकरणं ( 49–60 )

ब्राह्मणोय न गृह्णाति शास्त्राणि सुमना अपि । कृणुते चान्नयत्न च मनुते ऋणमोचनम् ।। 49 ।। शृणुते लोकवार्ता च भणते स्वयमप्यहो । मयोक्त श्लोक सत्पाके शोक विच्छेद कारके ।। 50 ।। एक वाऽर्धंच सार्घ वा श्लोक त्यजति काकधी । अतो न वक्ष्ये शास्त्राणि सूक्ष्माणि विविधानि च ।। 51 ।। गह्वरेण सुराणा च स्वराणा तु तथैव च । ग्रन्थ रत्नस्य बाहुल्यात्साफल्याद्वचनस्य मे ।। 52 ।। अयोग्य जन मोहेन स्वयोग्य गतिमिच्छताम् । सुजनाना द्विज श्रेष्ठ कुजनान् भजता तथा ।। 53 ।। न वक्ष्ये सूक्ष्म वृत्तान्तं ध्वाङ्क्ष वृत्ति च काङ्क्षताम् । गेह गत्वा स्वदेह च गूहयित्वा महद्भ्रयात् ।। 54 ।। तेपि सूनृत वाक्य चेद्वदन्ति कुजना अपि । हृष्टा पुष्टा भवन्त्यद्धा मनसा देहतस्तथा ।। 55 ।। परुष चेद्वदन्त्येते कलुषीकृत बुद्धय । अहमेतादृशान् वक्ष्ये जनान्न

प्रति पुत्रक ।। 56 ।। तस्मादल तावतैव यावदीश्वर प्रेरितम् । कारितं चेतनेदं तु तारित भव सागरात् ।। 57 ।। मारित दैत्य कूटच पार तन्त्याद्द्विरुपत । इद वृन्दावनाख्यानं ये न शृण्वन्ति मानवा । दानवाना गतिं प्राप्य श्वान जन्मानि यान्तु ते ।। 58 ।। लक्ष्मीपते मम कृतिं नितरां सुतस्य सीतापतेश्च कृतकृत्यगते. प्रयत्नात् । नित्य तु तत्रगत एव च त्व तु हित्वा कृत्य तवापि पतितानपि पावयन्ती ।। 59 ।। श्रावयाज्ञा मया दत्ता धृत्वा शिरसि पालय । अवामि त्वां सदा यत्नात्तवायुर्वुद्धि मेष्यति ।। 60 ।।

## 5. बहुभक्त श्रोतृक प्रकरण (61-65)

हे दासा. सन्ति लोके (ऽस्मिन्) च के दासास्तु भवादृशा' । को दासत्व मवापेह खेदात्सर्वे पुनर्गता ।। 61 ।। मम सङ्गीत लीलाश्च मद्भक्त्या च सुनिर्मला. । भवता कमला देवी गेहे तिष्ठतु लालिता ।। 62 ।। यूय वृन्दावनाख्याने ममाख्यान परान्बहून् । श्लोकान्सङ्गीत सस्थान्वै वै ह्यङ्गी कुर्वध्व मञ्जसा ।। 63 ।। इदमेव महत्कार्यं भवता मम पूजनम् । इदमेव महाप्रीति साधनं भवता मतम् ।। 64 ।। भवद्भिस्तु सुमङ्गीत मा च शृङ्गार रुपिणम् । श्रुत्वा गा अपि सर्वेपि नि सङ्गा-यान्तु मद्गतिम् ।। 65 ।।

## 6 विप्र प्रकरणं श्लोक – ( 66-70 )

हे ब्राह्मण त्व कुरु चान्नयत्नं मद्वाक्य रत्नं शृणुते न को ऽपि । अनादरान्मद्वचनं सुतोपि तृणोपम तत्कृतवानहो मे ।। 66 ।। मत्सुतानादरं दृष्ट्वा सर्वे कुर्वन्त्यनादरम् । अतो निराशस्त्व विप्र भवराशि तरस्वह ।। 67 ।। कुटुम्ब भरणार्थं च मरणार्ति सम त्यज । करण चातियत्नस्य शरण व्रज मा मुनिम् ।। 68 ।। यावदीश्वर दत्तं वै तावतैव सुखी भव । मावतास्त्व सदा विप्र तावकस्य वच शृणु ।। 69 ।। मद्वाक्य रत्नमाशु त्व घर कालान्तरे मम । आलय यास्यसे विप्र पालकोह सदा तव ।। 70 ।।

### 7. वादिराजास्य प्रकरण ( 71-78 )

वृद्धे बुद्धिमता वुद्धे श्रद्धाबद्धे दयां कुरु। कारुण्य कुरु चारण्य न वस त्व मुनीश्वर ॥ 71 ॥
ब्राह्मणे मत्पद प्राप्ते शरणं करुणार्णव। स्वस्थ चित्तो भवत्वद्य मत्कृर्ति सतत वदेत् ॥ 72 ॥
सतां च शृण्वता नित्य सत्य कुरु मयोदितम्। पुत्र माकुरु लोभं त्व सत्रकालोय मञ्जसा ॥ 73 ॥
कुत्र लोभो ननिन्दार्हं पात्रपालो भवाशु च। त्वन्मन स्थमहं वक्ष्ये मन्मनः स्थं त्वदग्रतः ॥ 74 ॥
शृणु ब्राह्मणमुद्दिश्य दातव्य किञ्चन त्वया। त्वन्मन. स्थमह वक्ष्ये श्रुणु ष्वैक मनाः सुत ॥ 75 ॥
परेण दापयिष्यामि नाहं दास्यामि सर्वथा। इद त्वद्धृदय विद्धि मम यद्धृदि सस्थितम् ॥ 76 ॥
वृन्दावन कृति वक्तुं मन्दाशनमिद कुत। त्वं दानं कुरु किञ्चिद्वा मन्दानामपि तद्वद ॥ 77 ॥
इद हृदिस्थ सद्बुद्धे कुरु चाद्धा बुधेरितम्। क्रोधं माकुरु वृद्धे त्व तवायु र्वृद्धिमेष्यति ॥ 78 ॥

### 8 विप्र प्रकरणं श्लोक – 79

विप्र ते मत्सुतेनैव दापयिष्येऽन्न मुत्तमम्। तदन्तः प्रेशयित्वाह मदन्तर्यामिता स्मर ॥ 79 ॥

### 9 वादिराज भट्ट प्रकरणं ( 80-87 )

मन्नाम धार कृशदार धरासुताग्र्च हे धीर पूर्वगिर मौरस पुत्रकेऽपि। माता पिता न वदत स्त्वण्रे
कुतो नु तत्क्षाम्यता शुभमतिं भज मत्कृतिं च ॥ 80 ॥ कृते चानादरे लोके मत्कृतौ च त्वयाप्यहो।
अनादर तु सर्वेऽपि कुर्वन्त्येव न सशयः ॥ 81 ॥ अतो मया यदुक्त तु परोक्त मिव नो भवेत्।
भवमन्नाम धाराग्र्च तावकोहं न सशय ॥ 82 ॥ तस्मात्कृति ममत्वत्र पुत्रवत्पठ पाठक।
काठकस्य यथा पाठ कुर्वन्ति ऋषय सदा ॥ 83 ॥ ब्राह्मणस्यान्न कामस्य कोन दास्यति मानिनः।
अद्याशनेन शून्यस्य तस्य पुण्य मनन्तकम् ॥ 84 ॥ विप्रान्न सिद्धि पर्यन्तं कुर्यां निरशन व्रतं।
नैवेद्य नैव गृह्णामि तावत्पर्यन्त मेव च ॥ 85 ॥ अह मद्भक्तवश्यश्चाभक्तस्याशुभ प्रदः। भक्त-
वत्सल देवस्य स्वभावो भक्तवश्यता ॥ 86 ॥ अहं विप्र मुखेनैव भोक्ष्ये चान्न तनौ तथा ॥ 87 ॥

**10. सीतापति प्रकरणं – ( 88–93 )**

ममोपदेश कर्णस्य सन्मणि. स्वगत. सुत । जानीहि चापणस्थस्य वणिज. प्राप वै वशम् ॥ 88 ॥
अन्नार्थं ब्राह्मणश्चासौ कर्णाभरण विसृज्य च । आपणे वाणिजो हस्ते मणि दत्वा गुणार्णव ॥ 89 ॥
आनीतवान्स्वक गेह तण्डुलान्कुण्डलेऽत्यजत् । एतादृशोयं सुक्षीणो मणिनान्न प्रदत्तवान् ॥ 90 ॥
पुत्रमित्र कलत्राणां स्वय तु बुभुजे तदा । मत्कर्णमणिमात्रं वा त्याजयाशु पणार्धत ॥ 91 ॥
स्वर्णेन सहित कर्णे दक्षिणे धारणं त्वयम् । करोतु पुरतो विप्रो मम कारुण्य रूपिण ॥ 92 ॥
एव तु पक्षपातेन पक्षोकुर्यामह द्विजम् । सुक्षीण श्लक्ष्णया वाचा मत्कृतौ पक्षपातिनम् ॥ 93 ॥

**11. विप्र प्रकरणं श्लोक ( 94–97 )**

स्वर्णेन शून्ये मणिनाच दक्षिणे कर्णे न वक्ष्ये तव विप्रवर्य । मत्प्रेरिता दत्तवती च ते सती निष्कार्ध
मात्र मम वृन्दावनाग्रे ॥ 94 ॥ तत्कर्णस्वर्णसङ्कीर्णं कर्णा भरणं च ब्राह्मण । आपणे वणिन
पाणौ कुतस्त्व दत्तवानसि ॥ 95 ॥ तदागमन पर्यन्त न वक्ष्ये दक्षिणे तव । कर्णे ब्राह्मण मे वाणी
पुण्यहीनोसि तत्क्षणे ( दक्षिणे ) ॥ 96 ॥ अत शीघ्र तदादाय पुनर्धर धरासुर । गुरोराज्ञा
न वैराग्या निराकुरु नराधम ॥ 97 ॥ एतत्सर्व स्वाप्नपद्येन गर्व हित्वा सर्वे विप्रवर्यास्यजेन ।
श्रुत्वा चोर्व्यां शर्व गुर्वादि देवान् दृष्ट्वोर्वशी यान्तु मा मातबेन्द्रा ॥ 98 ॥ इदवृन्दावनाख्यान
ये पठन्ति मनीषिण । मुकुन्दावनमेवास्तु तेषा कन्दाशनाशय ॥ 99 ॥ इदमर्पितमेवास्तु हयशीर्षस्य
पार्षदात् । समसहस्रशीर्षस्य सूक्तस्य पुरुषात्कृतम् ॥ 100 ॥ यच्छृण्वता भक्तिरुदार सद्गुणे हरौ
हरे र्लोकगते तथा मयि । भवत्यहो सर्व शुभाप्ति सन्मती ददात्यजस्र सुत सत्यमेवतत् ॥ 101 ॥

ॐ इति श्रीस्वाप्नवृन्दावनाख्याने वैभवपर्वणि अलौकिक विभागे त्रयोदशा ध्याय समाप्त ॥

॥ श्रीकृष्णार्पणमस्तु ॥

# अथ चतुर्दशाध्यायः

## 1. सीतापति प्रकरण ( 1-6 )

हरिः ओ । सीतापते शुभकृते वितता च कीर्ति त्वं चात्रमित्र कृतवानसि पात्रपाल । सुत्राम पुत्र कृत दुष्कृत हृन्तृनाम त्व सार्थकं कुरु ऋषेस्य निषिद्धकृत्ये ।। 1 ।। मया निषिद्ध वृद्धोय क्रुद्ध. ससृति पद्धतौ । सद्बुद्धिरपि सङ्क्षुब्ध. क्षुधया तद्वचधाद्बुध. ।। 2 ।। मत्कर्णसन्मणि स्वर्णयुक्तं त्याजितवानसि । वणिजः पाणिग प्राणिन् सुत्राण कुरु ब्राह्मणम् ।। 3 ।। मणिना विलसत्कर्णे मद्वाणी दक्षिणे ऽनिशम् । भणामि शृणु पुण्यात्मन् गुणमाणिक्य वादिनीम् ।। 4 ।। अतोपि पुण्यवान्कर्णे मणिं धारितवानसि । ब्राह्मणेन गुणिन् धीमन् सुक्षीणोऽय न सशय ।। 5 ।। इत परमह वक्ष्ये सुक्षीणे ब्राह्मणोत्तमे । लक्षण मम सर्वतु शिक्षन्सर्वान्विचक्षण ।। 6 ।।

## 2. शेष प्रकरण ( 7-9 )

हे शेष दोष रहित मच्छिष्य वृष पोतक । पौष्य दारिद्रच तद्दोष त्व शेष शोषयाशुव ।। ।।
नरस्तोत्रज दोष तु नरसिह्व स्तुते नं हि । नरोत्तम शृणु त्व हि नरजन्मानि नैव मे ।। 8 ।।
तस्मान्मद्भक्त मुख्यस्य विप्रस्य कुरु सत्कृतिम् । मत्कृति सर्वदा वक्तु तत्कृततु ममैवहि ।। 9 ।।

## 3. विठ्ठल प्रकरण ( 10-11 )

विठ्ठल भ्रष्ट सन्मार्ग दुष्टबुद्धि च माटभो । काष्ठायां तिष्ठ पापिष्ठ शिष्ट द्रोहमिमं त्यज ।। 10 ।।
शिष्ट लक्षण दुष्टास्त्व पूर्वकष्ट तु सस्मर । कपट हृदि तिष्ठन्त त्यज विठ्ठल संस्फुटम्।। 11 ।।

## 4. लक्ष्मीपति प्रकरण .– ( 12–56½ )

एवमेव ह्यविश्वास कुर्वन्तीति मयेरितम् । पूर्वमेव पर विप्र कुरुवृत्ति च माधवीम् ।। 12 ।।
लक्ष्मीपते कृतिं सान्तां सुत सीतापति वद । चरमा वा कृति सम्यक् परमा तु तयोर्वद ।। 13 ।।

कुरुमापति भक्ति च सारमन्त्र च दास्यति । एव शेपस्य तोषार्थं व्यासस्यापि शुभाप्तये ॥ 14 ॥
श्रीश भक्तस्य मद्भक्ति युक्तस्यापि सदा वद । एव बुद्धिस्तवापीह शुद्ध क्रुद्धस्तु मा भव ॥ 15 ॥
श्रद्धा कुरु बुधोक्तौतु वृद्धे सख्य सदा कुरु । शत शत च पद्याना प्रत्यध्यायगत कुरू ॥ 16 ॥
इति पूर्व मया प्रोक्त तत्सत्य समभूदहो । मम सङ्कल्प सिद्धत्वे ह्यविश्वासस्तवापि च ॥ 17 ॥
कारण समभूत्काण सुक्षीर्णं पश्य ब्राह्मणम् । पुत्र कृत्रिम भवनोयं विप्रो नैव तवापि च ॥ 18 ॥
ऐहिकाभाव मात्रेऽपि ह्यनुत्रार्थो भविष्यति । तस्माद्विमान मारुह्य ब्राह्मणोय गुणार्णव ॥ 19 ॥
मत्समीपमथागन्ता पश्य कालान्तरे सुत । आयुः शेषे तथा नीते प्रीते मयि सुताञ्जसा ॥ 20 ॥
हरौ प्रीते तथा प्रीते त्वयि का सुकृति. कृता । स्त्री सङ्गिन. कथ चास्य स्वप्ने वक्ति गुरु स्वयम्
॥ 21 ॥ इति शङ्कापि ते मास्तु नि सङ्गोह न सशय । अर्भके गर्भ सस्थेपि स्वर्भानुग्रस्त भानुवत्
॥ 22 ॥ तवार्भक. पुमानेव भूसुरेश भविष्यति । विप्र त्व तव पुत्र तु मम नाम्ना समाह्वय ॥ 23 ॥
इति पूर्व मया प्रोक्त मनुसन्धत्स्व बुद्धिमन् । विप्र तत्कृत्रिम श्लोकैः पुत्र बुद्धि प्रतारकैः ॥ 24 ॥
शस्त्र क्षत क्षात्रवत्ते कात्र हानि परत्रवा । तुष्णी तिष्ठ सुशर्मिष्ठ काष्ठमौन दृढ कुरु ॥ 25 ॥
शिष्ट कष्टमतिर्माते सुष्टु त्व पठ मत्कृतिम् । गुणार्णव तु मद्वाणी भण मन्नान्दन गुणिन् ॥ 26 ॥
शृणु तस्य सुधावाणी प्राणिना पापनाशिनीम् । श्रेणी प्राप्नोषि तद्वाण्या. श्रवणाच्छ्रेयसा सदा ॥ 27 ॥
मन्नन्दन पद धन्य ध्यात्वा त्व तु दिने दिने । रूदनं मदनावास तदनङ्गीकुरु प्रिय ॥ 28 ॥
मन्नन्दन गृहद्वारि शुनवत्सस्थितो भव । शृणु तद्गुण सम्भूति भण वृन्दावने कृतिम् ॥ 29 ॥
इद मे बुद्धि चातुर्य क्रुद्धस्त्वाचार्य मा भव । वृद्ध. श्रुत्वा सदा कार्यं श्रद्धावान् शृणुकार्यत. ॥ 30 ॥
अह गच्छामि मच्छाप स्वच्छाना न भविष्यति । कृच्छ्रात् कृच्छ्रतर यान्तु मच्छापा त्कुत्सिता नरा
॥ 31 ॥ अय तु कुजन कृष्णोप्यप्पण फणि बुद्धिमान् । इति पूर्व मया प्रोक्तमनु सन्धत्स्व बुद्धिमन्
॥ 32 ॥ गालीदानेन चैनं तु तोलयामि पुन पुन । ताल्काण्डेन त विप्र तोलयामि पुन पुन. ॥ 33 ॥
एतत्कृतौ सुदाढर्यार्थं मुढ विप्र मुखेन तु । काठिण्य वच्मि पाठेन सौष्टवेनैव चात्रतु ॥ 34 ॥
स्त्री मुखेनापि कात्रापि शङ्का मास्तु सुपुत्रक । श्लोकान्वक्तु प्रविष्टोह काकवृद्धौ द्विजोत्तमे ॥ 35 ॥
तोके लौकापवादेन शोको नास्ति ममेह च । प्रश्न न कुरुते तत्वे न स्नाति मम तीर्थके ॥ 36 ॥

अश्नाति मृष्टमन्न मे शिश्नोदर परायण. । ज्ञानिन् कटाक्षत श्चोक्त जानीहि त्व सुपापिनम् ॥ 37 ॥ धीमन्नकुरु तद्वाक्य धीमान् भव सदा बुध । तल्लक्षणं न वक्ष्यामि त्वमाचक्ष्व विचक्षण ॥ 38 ॥ सङ्क्षेप तश्चोक्त मेतत्काल क्षेपस्य शङ्कया । तद्वाणी न शृणु प्राणिन्प्राणिन प्राणिना वर ॥ 39 ॥ श्रेणी प्राप्नोषि पुण्याना मद्वाणी गृणुष्वे (षे) ति चेत् । विप्रमुद्दिश्य यत्प्रोक्त तत्प्रोक्त च मयैवतु ॥ 40 ॥ तत्प्रोक्त पापिना तेन विप्र. स्वार्थ तदुक्तवान् । इति तद्वचन किञ्चिन्न शृणु त्व च नन्दन ॥ 41 ॥ क्रकच छेदन प्राप्य छिन्न भिन्नो भविष्यति । माददस्वेति यो ब्रूयाद्गव्य गो-ब्राह्मणेषु च ॥ 42 ॥ सयाति निरय घोरं यावदाभूत सम्प्लवम् । तस्मान्न शृणु तद्वाक्य मद्वाक्य शृणुषे (ष्वे) तिचेत् ॥43 ॥ एतद्वाक्यमपि प्रेष्ठ द्विजोक्त मिति वक्ष्यति । सोऽ त्यन्त तव विश्वासी देशीयो ब्राह्मणोह्ययम् ॥ 44 ॥ कोशार्धमपि दास्यामि दासाय भव सागरे । जन्मान्तरे कर्मनाशे धर्मान्ते शर्म वर्म च ॥ 45 ॥ कुर्म कूर्मोऽनृताब्धौ च नर्म मात्रेण धर्मिणाम् । देवताना मानवाना दानवान्तक एव सन् ॥ 46 ॥ दत्तवान्मित्र सन्ताप कृतवान् शस्त्रज भयम् । जानीही-त्यत्र चानोत वर्ण वैषम्यत. सुत ॥ 47 ॥ जानीहि तस्य वैषम्यात्स्वरुप त्व मुनीश्वर । मद्दात्ताचार्य नाम्नापि कदापि न वदत्यहो ॥ 48 ॥ वदाद्य विबुधेश त्व मदान्धस्य सुपापिनः । साम्ना वच्मि सुसाम्ना यो न भणत्यन्त्य एव स· ॥ 49 ॥ दाम्ना बध्वा नयिष्यामि चाम्नाया त्सुबहिष्कृतम् । दूतैर्यमस्य सौम्यत्व काम्यं वा नास्ति तस्य च ॥ 50 ॥ स्वाम्य मात्रेण सन्तुष्टो भौम सयमिनी पुरे । क्रकचैद.र्यते पुत्र स्वकचेषु प्रगृह्य च ॥ 51 ॥ श्वपचैर्नीयते मार्गे प्रपच्येत नराधम. । नाम मात्रेण वा तोष पोषयस्व न शोषय ॥ 52 ॥ मृषा नहि सुषेणाग्र्य तावतैव प्रहर्षय । ब्राह्मणामरण वक्ष्ये कारणेन विनाप्यहम् ॥ 53 ॥ पुनर्वाणी हरिष्यामि प्रेरणामपि मे सदा । तस्मात्प्रतिज्ञा हान्यादि दोषो मम न कश्चन ॥ 54 ॥ श्रीश पादाम्बुजासक्त सेवके मयि कोप्यरिः । नास्ति चास्तिकता चास्ति सक्तिरेव सदा हरौ ॥ 55 ॥ स्वास्थ्य च मनस सम्यक् सदाऽस्ति प्राश्नि-कोत्तम । अयोग्य श्रवण न स्याद्यथा चाह करोम्यलम् ॥ 56 ॥ वाचतै ब्राह्मण मति सूचने ऽपि हरामि च ॥ 56½ ॥

5. विप्र प्रकरण ( 57-73 )

वीति ज्ञान समुद्दिष्टं ठेति तच्छून्य एव च ।। 57 ।। लेति तत्पालन चापि समुद्दिष्ट मठेश्वर । पदार्थः कोर्थ इत्युक्ते त च वच्मि सुलोचन ।। 58 ।। विदाज्ञानेन ठान् शून्यान् लाति गृह्णाति विठ्ठल. । इति विठ्ठल शब्दार्थ पठन्ति भुवि पण्डिता ।। 59 ।। पठ्ठवर्धन काष्ठासु श्रेष्ठ सम्यग्विचारय । एतदर्थानुकूल्येन निन्दा वाक्यानि सुन्दर ।। 60 ।। योज्यानि पूज्य सत्पुत्र रागद्वेषौ च नैव मे । तर्हि शापोक्तिरप्यत्र कुत्र तेच प्रयोजिता ।। 61 ।। कृत्रिम श्लोक कर्तृणा पुत्र मे सुप्रयोजिता । तर्हि तत्रापि ते ( तद् ) द्वेषो भवतीत्यपि मा वद ।। 62 ।। पुत्र तत्रापि मेचोक्तिरुपचारेण योजिता । भीषणार्थ सुषेणाग्र्च धिषणास्यान्न तादृशी ।। 63 ।। इति चोक्ति प्रेषणा मे दोष शोषण शृण्वहो । मद्भक्ता सुखिन. सन्तु शश्वज्जीवन्तु कान्त ते ।। 64 ।। शान्ति यान्तु ममैकान्ता स्वान्तस्थ हरि चिन्तया । तस्माद्वामे तपो हानि र्नास्ति दोषोऽपि कश्चन ।। 65 ।। शास्ति मां शाश्वती (ती) भक्ति हयग्रीवः कृपाम्बुधि । हयग्रीव प्रसादोऽयमीदृशो वर्तते मयि ।। 66 ।। भवग्राहाच्च मे नित्यं त्याजयामास पूजया । अहमाराधन तस्य कारयामि त्वयापि च ।। 67 ।। प्रेरयामि सुबुद्धि ते तारयामि भवाब्धित । तस्मादाराधन तस्य नित्य कुरु मनोरम ।। 68 ।। परमा प्राप्स्यसे सिद्धि शुद्धि च हृदि नित्यश । कस्यापि निन्दा न कृता स्वस्यापि सुकृत शपे ।। 69 ।। तस्यापि प्रकृति श्चेय पश्यापि विकृता कृतिम् । एव स्वरूप कथन कृत पूर्व मया मुने ।। 70 ।। स्मृत दैववशेनेह वृत्त चाज्ञानतः प्रिय । यादृश कपट तस्य दास्यामीति च विठ्ठल ।। 71 ।। हृदि तिष्ठति ते नित्य तादृश त्यज सस्फुटम् । इति सप्रार्थयाम्यत्र कात्र शङ्कापि मा तव ।। 72 ।। तदर्थमेव सत्पुत्र सोऽपि मित्र भविष्यति । तस्मादरागद्वेषोहं शेषशाऽयि पदे शपे ।। 73 ।।

6 लक्ष्मीपति प्रकरण ( 74-94 )

विप्रास्याच्चोपदेशो मे नायास्यति कुतः सुत । इति ते शेमुषी मास्तु तदास्यादा हरामि तम् ।। 74 ।।
गौप्यत्वात्सोप्यतितो भूत्भूपतीना सभापते । क्वाप्यतो नैव मे चोक्त हानि. पश्य सुपुत्रक ।। 75 ।।

सहस्र वच्म्यह श्लोकशत वाप्ययुतं प्रिय । नियुत प्रयुतं वापि चाहरामि तदास्यत. ॥ 76 ॥ एव नित्य च वक्ष्यामि पक्षीकृत मुखेन च । लक्षीकृत प्रमेयच शक्ष्याम्याहर्तु मेव तत् ॥ 77 ॥ उक्त श्लोकेषु शक्तश्च गृहीतु सर्वमेव च । अथाप्ययोग्यजीवाना योग्यं नेत्याहरामितत् ॥ 78 ॥

## 7. लक्ष्मीपति प्रकरणान्तर्गतं विठ्ठल प्रकरण श्लोक ( 79-83 )

सुत सुलोचन लोक पूजित यति कुलोचितलोप्तृपालक । वृतबलोचितकृत्य लोल ते शतधृतेरपि लोक मलोक्य ते ॥ 79 ॥ हे पुत्र पुत्र विप्रस्य कार्य विस्मृतवानसि । हा तत्र तत्र कर्तव्य यत्र ते वाक्य गौरवम् ॥ 80 ॥ तूष्णी स्थिते मयि सुत सर्वथा विस्मृति र्भवेत् । अतस्तवाह स्मृत्यर्थं वक्ष्याम्यद्य पुन पुन. ॥ 81 ॥ मामाश्रितश्च विप्रोऽय कामान्वित मति र्भवेत् । सोमाश्रयाद्यथा रुद्रोप्युमाकान्तो गतव्यथ. ॥ 82 ॥ तथाय ब्राह्मण श्रीमान् त्वया मुक्त ऋणव्यथ. । भवेदामरणान्तं च मा तात शरण गत. ॥ 83 ॥

## 8. पुन लक्ष्मीपति प्रकरण – ( 84-94 )

उक्त मे वितथ जात शुक्तिरूप्य यथा सुत । अत्यन्तासत्वत कान्त भ्रान्ते विषयमेव तत् ॥ 84 ॥ तद्वदर्थक्रियाकारी न भवत्येव मे मति. । इत्यनादरत पुत्र कृत्रिमेतिच मत्कृतिः ॥ 85 ॥ विप्रेणैव कृता चात्र कात्र ( नात्र ) हानि परत्रच ( वा ) । अकृतेऽपि तदुक्तार्थे स्वार्थं वक्ति द्विजो वृथा ॥ 86 ॥ कार्तिर्मम कृतेचार्थेप्य कृतार्थेऽपि वा सुत । इति ते शेमुषी न स्यात्पश्याद्य सु विशारद ॥ 87 ॥ कस्यवाकृतिरेवेय स्वस्य वाद्य द्विजस्य वा । हे केशव त्व तोकस्य स्मारक प्रेरको भव । 88 ॥ कार्य मे कारय क्षिप्र विप्रस्यापि सुतेन मे । अन्यथा भक्तवश्य त्ध तव नस्या त्स्वदास्यकम् ॥ 89 ॥ पश्याद्य चक्षुषा स्वेन करुणा रस वर्षिणा । अच्छिन्न भक्ति सञ्छन्न पृच्छन् सल्लाञ्छन तव ॥ 90 ॥ इच्छन् सञ्छिन्नबन्धं च त्वा मञ्चन्काञ्चनं त्यजन् । ज्ञान वैराग्य भक्त्याख्य सखिभि सुखमेवच ॥ 91 ॥ प्राप्नुया स्वाप्न पद्यैर्मे चाप्नुयाच्छोभन नरः । विदित्वा मद्गति श्रुत्वा कृत्वा भक्ति मयि प्रिय ॥ 92 ॥ भुक्त्वा भूतिच मा स्तुत्वा

छित्वा ससृति बन्धनम् । इत्यह् देव देवेश वेदे वेदे च सस्तुतिम् ।। 93 ।। कृत्वा कृत्वा प्रार्थयामि दृष्ट्वा दृष्ट्वा तमव्ययम् ।। 94 ।। एतत्सर्व स्वाप्नपद्येन गर्व हित्वा सर्वे विप्रवर्यास्यजेन । श्रुत्वा चोर्व्यां शर्व गुर्वादि देवान् दृष्ट्वोर्वशी यान्तु मा मानवेन्द्राः ।। 95 ।। इद वृन्दावनाख्यान ये पठन्ति मनीषिण । मुकुन्दावनमेवास्तु तेषा कन्दाशनाज्ञया ।। 96 ।। इदमपि तमेवास्तु हयशीर्षस्य पार्षदात् । समसहस्रशीर्षस्य सूक्तस्य पुरुषात्कृतम् ।। 97 ।। यच्छृण्वतां भक्तिरुदारसद्गुणे हरौ हरे लोकगते तथा मयि । भवत्यहो सर्व शुभाप्ति सन्मती ददात्यजस्रं सुत सत्यमेवतत् ।। 98 ।।

ॐ इति श्रीबाह्मणस्वाप्नवृन्दावनाख्याने अलौकिक विभागे निदर्शन पर्वणि चतुर्दशाध्याय. समाप्त ।।

।। श्रीकृष्णार्पणमस्तु ।।

# अथ पञ्चदशोऽध्यायः

### 1 विप्र प्रकरण श्लोक (1–15½)

हरि॰ ॐ । ऋणेप्यथ शरण्य तं करुणां त्वयि कारिणम् । शरणं व्रजकारुण्यात्तस्य ससरणं
जहि ॥ 1 ॥ इति ते बुद्धिरद्धोक्ता वृद्ध क्रुद्धश्च मा भव । बद्धभक्तिश्रद्धासमिद्धश्च मदङ्गजे
॥ 2 ॥ शिखागृहीत्वा वक्ष्यामि सखात्व मम सर्वदा । सुखावासान्प्रवक्ष्यामि मखावासादपि प्रियः
॥ 3 ॥ मद्वशे सति मध्वेशे मध्वाचार्यं प्रिये मयि । मधुघातक भक्ता ये भक्ति कुर्वन्ति नित्यशः
॥ 4 ॥ श्रावयत्वं मम श्राव्य चरित चरतोऽमृतम् । पावयत्व पावकाद्धि विशुद्धि मुग्ध लोहके
॥ 5 ॥ यथा तथा वृथा विप्र माकृथास्त्व व्यथामथ । पृथासुता यथा पार्थां कृतार्था सत्कथा
सताम् ॥ 6 ॥ वद वृन्दावनेऽमन्दानन्द सन्दोह मन्दिरे । सदा कन्दाशनामन्दानन्ददस्य गदाभृतः
॥ 7 ॥ भक्तस्य त्यक्तपापस्य सक्तस्य तदतिप्रिये । शक्तस्य भक्तियोगे च रक्तस्य मम सत्कृतिम्
॥ 8 ॥ एव चेद्भवति प्रेष्ठ श्रेष्ठबृत्तिरपि प्रिय । ममेष्ट निष्ठात् सत्पुत्रात्सर्वाभीष्टं भवेत्तव
॥ 9 ॥ पुत्र पूतेन ( प्रीतेन ) पित्रा च पुत्राशा पूरिता मया । पित्रा पूतेन पुत्रेण पित्राशा मे न
पूरिता ॥ 10 ॥ उपकारस्योपकारः क्रियते लोक सज्जने । उपकाराभावतोऽपि ह्युपकुर्वन्ति
पूर्वजा ॥ 11 ॥ उपकार निमित्तेन ये कुर्वन्त्युपकारकम् ( रिताम् ) । राजसास्ते च विज्ञेया
ह्युपकारार्थिनः परे ॥ 12 ॥ उपकारा निमित्तेन ह्युपकुर्वन्ति ये परे । सात्विकास्ते च विज्ञेया
ह्युपकारनिराशिनः ॥ 13 ॥ उपकारेपि ये नैव कुर्वन्ति ह्युपकारकम् । [illegible] च विज्ञेया-
ह्युपकारापकारिणः ॥ 14 ॥ लोकनीतिरियं तात शङ्का ते मास्तु सा सुत । सात्विकस्त्वं मत.
सौम्य काम्य मे नास्ति सर्वथा ॥ 15 ॥ तवैव कर्तव्य मेतन्मन्त्रिरूप परं स्मर ॥ 15½ ॥

### 2. सीतापति प्रकरण ( 16–55½ )

अहं प्रेरयिता पूर्वराजानं शेषमेव च ॥ 16 ॥ शैव मुद्राङ्कित ग्राममध्यस्थं वामनेरितम् । सुक्षेत्र-

मददा पुत्र तत्र दृष्टिं करोति य. ॥ 17 ॥ सुत्रामलोकसन्त्रस्तो याति सावित्रमेव च । इह तस्य सुसन्तान नाशं याति न वै मृषा ॥ 18 ॥ शनै र्मद्द्रोहतो नाकाच्च्युत. कीनाश लोकितां । याति तत्रानेक यातनाया नारकिभिः सह ॥ 19 ॥ अनुभुङ्क्ते मनो कल्पपर्यन्तं दु खमेव च । ततो विष्ठाक्रिमित्व च काष्ठासु प्राप्यते सुत ॥ 20 ॥ षष्ठिवर्षसहस्राणि श्रेष्ठ तेनैव पापिना । तस्माद्विप्रस्य या वृत्तिर्न हर्तव्या हितेप्सुभि. ॥ 21 ॥ विप्र ग्रामेषु यो भुङ्क्ते करं राजाधम क्वचित् । स याति निरय घोर रौरव सौरिशौर्यत: ॥ 22 ॥ श्रोतव्य राजभिर्नित्य मन्निरुप परात्परम् । कर मह्य च दत्वा तु त्वरया ऽरौरवाश्च (ते) ये ॥ 23 ॥ सीतापते मम सुतस्य कृतार्थताच श्रुत्वातु मत्कृति शतैर्विततार्थ पूनै. । सन्तोष सन्ततिमथ प्रथयाद्य लोके त्वत्तोषतस्तदितरेऽपि सुतोषिता: स्यु ॥ 24 ॥ एवमिष्ट त्रय शिष्ट सुष्टु कारय प्रेष्ठ मे । काष्ठासु मद्या दृष्टिः श्रेष्ठ त्वय्येव नैष्ठिकी ॥ 25 ॥ भवतीह ततो सीतापते कान्त च मे सुतम् । तातस्त्व कुरु कृत्य ते त्वा पाति च स विश्वकृत् ॥ 26 ॥ इति सम्बोधयाम्भोधिशयनस्य सभातले । भविष्यति सुत स्थानमभय चापि मद्भटै ॥ 27 ॥ शतहायन पर्यन्त कृत हानिर्नचैव ते । वृतहारावलि शौरि मितहार प्रपूजय ॥ 28 ॥ मत्पाद सूर्य किरणेन तवान्तरस्थाज्ञानाधकार हरण कुरु पुत्रवर्य । मध्याह्नभानुकिरणेन हृदम्बुज ते चोत्फुल्ल पद्मवदति प्रवणं वरेण्यम् ॥ 29 ॥ मद्रञ्जिते च हृदये वरद हरि त सस्थापयाद्यसदन मदनाभिरामम् । मन्मन्त्र तन्त्र विधिभिः कुरु वारिधौ य शेतेच शेषशयने परमस्य पूजाम् ॥ 30 ॥ एव तद्ध्यानमानेन गान कुरु गुरूदितम् । मा संसारभय धीर वरदो ऽस्मि तवादरात् ॥ 31 ॥ मद्वाणी भण कल्याण कर्णरन्ध्रे शृणु प्रिय । गुणिनश्चरण नैव नन्दनस्यापि न त्यज ॥ 32 ॥ रामो राजीवनेत्रोसौ राज्ञः स्वैर वर ददौ । तदग्रज शरैर्हत्वा तद्वारानसि धारया ॥ 33 ॥ वृन्दावन हर स्वस्यैवाग्रत शिचर सस्थितम् । रक्तच्छर्दिमपि ह्यत्र कारयामास वीर्यवान् ॥ 34 ॥ तदारभ्यामरगणैर्मद्वृन्दावन मार च । तद्राज्य च ददौ स्वस्थ नामधारिण एव च ॥ 35 ॥ तद्विरोधिनि क्रुद्ध सन् रुद्र कालान्तकोप्यभूत । मम नन्दन वाक्येऽपि श्रद्धाराहित्यवानभूत् ॥ 36 ॥ तद्वाग्विरोधिनि क्रुद्ध. कथ कुर्यादनुग्रहम् । हिताहितोपदेशस्य कर्ताच गुरुरव्यय ॥ 37 ॥ गुरुद्वारा प्रसन्न सन् भरतीद रमापति । मन्निरूपित वाक्येषु चैक वा नैव

चाकरोत् ॥ 38 ॥ राजसेवासु निरतो नरक याति दारुणम् । गुरुरेव हरिः साक्षात् गुर्वन्तर्याम्यरि हरेत् ॥ 39 ॥ करोति परम चैवानुग्रह नरक हरम् । एतत्प्रमेयं सर्व तु वद सीतापते नृपम् (मतम्) ॥ 40 ॥ मया तस्मै कृत राज्य राज्ञे रामानुशासनात् । मम नन्दन सन्मान करोतु मनसाऽर्पितम् ॥ 41 ॥ मम वृन्दावने भक्ति शक्तिपूर्व करोत्वलम् । एव चेदायुरारोग्य राज्य सुस्थिरमेवच ॥ 42 ॥ रामस्यानुग्रहेणैव राज्ञ. सर्व भविष्यति । तस्मात्तस्मै वदस्व त्व गत्वा सीतापते कृतम् ( तिम् ) ॥ 43 ॥ सुतेन मम सन्मत्या मथित कथित तव । शेषमुद्दिश्य यत्प्रोक्त पञ्च पुत्रित्वमत्रतु ॥ 44 ॥ तन्मिथ्याभूतमेवासीदिति शङ्कापि मास्तु ते । पञ्च वृन्दावनान्येव तत्पुत्रा इति कन्दिना ॥ 45 ॥ मया नन्दन सप्रोक्त शृणु सुन्दर सद्गतिम् । पुत्रिणो या गति यान्ति ता गति याति निश्चिताम् ॥ 46 ॥ अत एव हि पञ्चाशद्युग पर्यन्तमेव च । महीयते स विष्णोर्हि लोकेऽपीति मयोदितम् ॥ 47 ॥ पूर्वजन्मनि राजाय द्विजचक्षु प्रजेरित । उज्जहारात्मजो ( जे ) नास तज्ज दोषेण चान्धकः ॥ 48 ॥ तस्माच्छूकापि शङ्काया मास्तु ते वै सुपुत्रक । काकवाक्यस्य सादृश्य तोक माकुरु मत्कृतौ ॥ 49 ॥ पूर्वतु सार्वभौमोयं कूर्मको नर्मदा तटे । शर्मणे नर्म कृत्स्वैर तदूर्मिगत नौर्गत. ॥ 50 ॥ स्त्रीगणैः सहित. स्त्रैणो ब्राह्मणै शापमाप च । आणिमाण्डव्य कण्वाद्यैरणि माद्यष्ट सिद्धिभि ॥ 51 ॥ " राज सेवासु निरतो रामस्यानुचरा-ग्रजे । मृते सति गरैर्योगे तस्यावरज राज्यहा ॥ 52 ॥ तद्द्रोहतोह्यभद्र च यास्यती ति च ते शपु । इति शप्तस्तत्र चैकं विप्रं यत्प्रेरिता द्विजा. ॥ 53 ॥ ददु स्वपुरतः शाप त प्रजाभिः समी-रित' । कारागृहे रहस्येतु ह्यसह्य त प्रहस्य च ॥ 54 ॥ प्रहस्य स्वहितेनैव सहितो वसुहोत्रकम् । नेत्रस्योत्पाटन चक्रे पुत्रमन्त्रिनिवारित ॥ 55 ॥ विप्र द्रोह फलं चैतन्नेत्रयोर्नाशन मुने ॥ 55½ ॥

### 3. विप्र प्रकरण श्लोक ( 56–58 )

इति पूर्वकृत कर्म शर्मनाशाय चे ह तत् ॥ 56 ॥ अह धर्मगति दास्ये तस्य मर्माणि नो वदे । इत्येकं श्लोकमाकाशे गते मयि गत द्विज ॥ 57 ॥ आदत्स्व त वदस्वेह मम पुत्रस्य चाग्रत । स्वपुरोहितमाराध्य चाग्रजन्मा भवत्तत. ॥ 58 ॥

**4. शेष प्रकरण श्लोक ( 59-61½ )**

वृद्धं नत्यज मद्वाच श्रद्धाशान्वरतीह च । मम पुत्र. कृतार्थ सन् आयातु भरताग्रजः ॥ 59 ॥ यथा कृतसमस्तार्थं स्तावद्वक्ता ह मत्कृतिम् । श्रुत्वा तु मत्कृति को वा सन्तोषं च करोति वै ॥ 60 ॥ सुत विना न पश्यामि मत्कृतौ तोषिण गुणिन् । अथापि वक्ष्ये सीताया पते नाम्ना वदन्तियम् ॥ 61 ॥ त प्रति प्रकृतिं तस्य जाने मत्कृति मञ्जसा ॥ 61½ ॥

**5. सीतापति प्रकरण ( 62-63½)**

सीतापते मम सुतस्य वर्शतु सर्व ‥त्सौ ‥ तदतिक्रम्य विरक्तता च ॥ 62 ॥ कृत्वातु वर्तत इह पतिना‥ ‥स्य त्वं पश्य कुत्र यतिवृत्तमना‥ति तादृक् । एवं कर्तव्य मत्कृत्येष्वत्यन्त विरक्तताम् ॥ 63 ॥ करोति प्रार्थय त्व च कृत्य कुरु गुरोरिति ॥ 63½ ॥

**6. विप्र प्रकरणं (64-66½)**

हे पुत्र ‥त्र मत्कृत्य मकृत्वागमन त्व ॥ 64 ॥ गतेऽपि कार्य सिद्धिर्वा कथ स्यान्मदनादरात् । हितार्थं त्व वक्ष्यामि सु‥ शृणु मद्वच ॥ 65 ॥ कृतार्थो भव तत्कृत्वा मतार्थत्रय मञ्जसा । नोचेद्धर्म. कथ ते स्यान्नामनादृत्य यास्यसि ॥ 66 ॥ तस्मात्कृत्यत्रयं कृत्वा गच्छपुत्र सुखी भव ॥ 66½ ॥

**7 सीतापति प्रकरण श्लोक ( 67-69 )**

सीतापते मम सुवाग्विभवस्य भूमि पूदेवक नव करेऽपि वानह च ॥ 67 ॥ त्व पुत्रवच्च परि-‥ वृद्धमेन शिष्योऽस्मि चेन्मम वच शृणु प्रीणयाद्य । इयमेकोक्तिरेवात्र गतोक्ति मेऽत्र सर्वथा ॥ 68 ॥ वृथा मा कुरु ते लोकवत्ते वुद्धि. कृपान्वितः । अन्येषा वचन नैव शृणु विप्रावमानिनाम् ॥ 69 ॥

**8 विप्र प्रकरणं ( 70–72½ )**

पापिना च प्रसङ्गोऽत्र स्मृत पूर्वकृतो मया। मय तरङ्गिणीस्युक्ते त्या चोक्त निरङ्गिणा ।। 70 ।। र्व देवनगङ्गेन तुरङ्गवदन स्मर। मद्दत्त निष्कपट्केण गर्वितोद्यैव विप्रक ।। 71 ।। पुनः पट्क च निष्काना अपर्पे कोटिना त्यज। पुरुषान्तर तत्वानि त्यज त्वं द्विजसत्तम ।। 72 ।। मज्ज-नेष्वग्रगन्तार शरण व्रज तं भज। 72½ ।।

**9. सीतापति प्रकरणं – ( 73–80 )**

पूर्वं शेषो ममाशेष वचन नैव चाकरोत् ।। 73 ।। तस्य राजापि किञ्चिद्वा मद्द्रोहफलमीदृशम्। ततः स्वदोषतो नष्टौ तावुभौ भूमि भारकौ ।। 74 ।। कोवा मद्द्रोहत कष्ट नानुभूयादिहात्र च। पूर्वं शेषो ममाशेषवचन नाप्यचष्टतम् ।। 75 ।। राजान तेन दोषेण कारागृह निवेशनम्। नित्य पुराणवक्तार ब्राह्मण ऋणाद्गुणिन् ।। 76 ।। पुण्ये वृन्दावने स्वस्थाप्यग्रतो नैव मोचयेत्। तेन दोषेण महता वित्तापहरण त्वभूत् ।। 77 ।। मम नन्दन वाक्येषु चैक वा नैवचाकरोत्। तेन दोषेण महता सर्वाण्येतानि चाभवन् ।। 78 ।। सहस्रलक्ष पर्यन्त प्रदक्षिण मथ क्षणात्। चकाराक्षि सहस्रेण लक्षितो यो विचक्षण ।। 79 ।। तदनादृत्य ताराणा शारदानाकरायितम्। हयग्रीवश्च हाराणां भार मे गौरवाद्दो ।। 80 ।।

**10. विप्र प्रकरणं श्लोक ( 81–85 )**

ममोपदेश कर्णस्याप्यादत्स्वत्वं सुकुण्डलम्। तेन कार्यसिद्धि च कुरु विप्र यथोचितम् ।। 81 ।। मत्स्वर्ण कुण्डले चापि तव दास्येति मे मति। जायते जायया युक्तो भज मा भुजगेश्वरं ।। 82 ।। किं करोषि दरिद्रस्त्वं विप्र रुद्र च मां भज। सान्द्र सौभाग्यवन्तं मे पट्टभद्रं च नत्यज ।। 83 ।। तण्डुला (मत्पुत्रा) गम पर्यन्त शौण्ड पद्यानि नो वदे। कुण्डले च गृहाण त्व मुण्डिन मां सुभोजय ।। 84 ।। त्वदन्तर्यामिण श्रीमन्सर्वेषा प्राणिनां गुरुम्। ममाभ्यवहृते. पुण्य स्यात्तवैवेह ब्राह्मण ।। 85 ।।

**11 लक्ष्मीपति प्रकरणं ( 86–97 )**

सीतापते न त्यज विप्रहस्त तवेह कोवागणयेद्गुणौघान्। नम्रस्य चाम्लानमुखस्य भक्तियुक्तयादिकान्

सन्मति शान्तिकान्ती. ॥ 86 ॥ कृत्यत्रय नैव चकार पुत्र त्व पश्य सीतापतिमा (तया) त्म काद्य । अद्यापि विप्रस्य तु कार्यलेश चकार तेनैव च तोषितो ऽहम् ॥ 87 ॥ अतस्त्वं कुरु भक्तानामग्रणी गौणता न ते । अध्यायान् पद्य जातानां वृद्धकार्य च किञ्चन ॥ 88 ॥ ग्राह्य बाह्य गुणानामप्यभि व्यञ्जक पुञ्जवत् । करण्ड पिण्डित तनु कुण्डलीव स पण्डित ॥ 89 ॥ प्रचण्डबुद्धिशौण्डोपि ब्रह्माण्डे लण्ड साम्यग । मम नन्दनसद्बुद्धिमनिशम्य सुनिश्चिताम् ॥ 90 ॥ वदने स तु भस्मानि मानयामास वेनवत् । कि करोति स पूर्वेण कर्मणा गतिमीदृशीम् ॥ 91 ॥ यातः प्रातः समुत्थाय मा गुरु स्मरतु प्रियम् । वक्ष्ये कर्महर सूक्ष्म कर्मिणा शर्मद सदा ॥ 92 ॥ कर्म चारभ्यते पुम्भि-र्नैष्कर्म्यज्ञान साधनम् । द्रु (घृ) त चैत (त्त) दत शुद्धि द्वारा दर्दुर जन्म च ॥ 93 ॥ निर्दल कुरुते सार्धं गर्दभाद्यपजन्मभि. । पूर्वजन्मनि यत्कर्म त्विह जन्मनि यत्कृतम् ॥ 94 ॥ तत्सर्व नाशयत्याशु मासिमासि सखिन् शृणु । तस्मात् सत्कर्म कर्तव्य कर्णश्राव्य कविप्रियम् ॥ 95 ॥ हरिप्रिय हरेर्ज्ञानसाधनं हरते मलम् । न कर्तव्य च दुष्कर्म कदापि कुगतिप्रदम् ॥ 96 ॥ यदि कुर्यात् सविप्रोपि कुम्भिनी त नर हरिम् । शशति ध्वसितात्मान नाह त सम्भरामि च ॥ 97 ॥

## 12 विप्र प्रकरणं श्लोक – ( 98–108 )

नन्द्वय कुतो विप्र प्रयुक्त च त्वयात्विह । एकेन पूर्वपद्यार्थे सिद्धे सत्यपर कुत. ॥ 98 ॥ नाह त सम्भरामीति मया प्रोक्ते त्वया द्विज । नाह तं न भरामीति प्रोच्यते शोच्यता न मे ॥ 99 ॥ तवापि न स्यात्सा ऽवस्था स्वस्थो भव सभासुच । मदवस्था वदस्व त्व मदुक्तश्लोकसञ्चयै ॥ 100 ॥ किन्तु त्वत्क्षेत्र विघ्नानि य करोति नराधम । तस्यैव सा शोच्यता स्यान्मयोपास्य हयास्यत ॥ 101 ॥ त्वच्चिन्तया किं मच्चिन्ता कुरु विप्र तवोच्चता । (तवोचिता । तवाच्युता)। वाञ्चित च भवेदञ्चन्मा काञ्चन रति त्यज ॥ 102 ॥ मुञ्च मुञ्चेह दुश्चित्तं मच्चित्त कुरु सर्वदा । मुञ्च काञ्चन चिन्ता त्व चिन्मात्र चाच्युत भज ॥ 103 ॥ रामचन्द्र वरभूपतिसान्द्रप्रेमवन्द्यचरणो रघुपेन्द्र । ब्रह्मरुद्र मरुदिन्द्र सुरेन्द्राराध्य राज्यवरदोऽसि नरेन्द्र ॥ 104 ॥ त्वदत्ततद्राज्यभूति कमलालय पालय । तेन सम्पूजितो नित्य स्वालय नैव चालय ॥ 105 ॥ इत्यह प्रार्थयामीह राघवेन्द्र मुनीन्द्रकम् । मम

वृन्दावने नित्यं देवेन्द्रैः सह सस्थितम् ॥ 106॥ मानवानां धने ऽहानिर्मधुसूदन शासनम् । विना नैवास्ति सन्देहो नैव पृच्छधनागमम् ॥ 107॥ पृच्छमां स्वच्छतत्वानि कच्छपस्य महात्मन । स्वेछया सच्चरित्राणा प्रायच्छं भक्ति मव्ययाम् (यम्) (भक्तिमेवयं) ॥ 108॥ एतत्सर्वं स्वाप्न-पद्येन गर्वं हित्वा सर्वे विप्रवर्यास्यजेन । श्रुत्वा चोर्व्यां शर्वगुर्वादि देवान्दृष्ट्वोर्वशी यान्तु मा मानवेन्द्रा ॥ 109॥ इद वृन्दावनाख्यान ये पठन्ति मनीषिण । मुकुन्दावनमेवास्तु तेषां कन्दा-शनाज्ञया ॥ 110॥ इदमर्पित मेवास्तु हयशीर्षस्य पार्षदात् । समं सहस्रशीर्षस्य सूक्तस्य पुरुषात्कृतम्॥ 111॥ यच्छृणवता भक्तिरूदार सद्गुणे हरौ हरे र्लोकगते तथा मयि। भवत्यहो सर्वं शुभाप्ति सन्मती देदात्यजस्र सुत सत्यमेव तत् ॥ 112॥

ॐ इति श्री ब्राह्मण स्वाप्न वृन्दावनाख्याने अलौकिक विभागे निदर्शन पर्वणि पञ्चदशाध्याय: सम्पूर्ण ॥

॥ श्रीकृष्णार्पणमस्तु ॥

# अथ षोडशाध्यायः



**1. शेष प्रकरण श्लोक-** ( 1–14½ )

हरि ॐ । मत्पादसेवाविषये ते सिसाधयिषास्तिचेत् । वृन्दावने शेष पद्य जातानि वद ह्योषसि ॥ १ ॥
नागाह्वय पण्डितोऽह ब्रह्माण्डेऽशौण्ड बुद्धिमान् । इतरः पण्डित षण्ढस्त्वमेवेह सुपण्डितः ॥ 2 ॥
त्वयानुभूत यत्स्वप्न मन्निरूपितमेव च । विद्धि बुद्धिमतां श्रेष्ठ वृद्ध मा त्यज सर्वथा ॥ 3 ॥
इद वृन्दावनाख्यान श्रुत्वा लक्ष्मीपते मुखात् । नि.सशयो भव त्व च सर्वेषा हर सशयम् ॥ 4 ॥
पश्यामि ते सुविश्वास मत्सुते शश्वदत्र हि । विश्वासिना समाजे च त्वमप्येक. प्रसन्नधी. ॥ 5 ॥
त्वमेव धर्मगोप्ताच गोपीनां पतिरव्यय । प्रीत प्रातः समुत्थाय तमेव हृदि चिन्तय ॥ 6 ॥
मद्वृन्दावनग गोपै. गोपीभिश्च समन्वितम् । गोभिर्गोविन्द नामान गोपाल हृदि सस्मर ॥ 7 ॥
गोपाल निर्मल तनो धर्मपाल तु पालय । तद्बाल च कृपाशील त्वच्चाञ्चल्य च चालय ॥ 8 ॥
इत्यह प्रार्थयामीह गोपाल बालरूपिणम् । श्रीलोल कालकालेच धर्मग्लातिर्यथा न हि ॥ 9 ॥
धीमानाचार्य नाम्ना यो दाम्ना बद्ध पुमानिति । धीमानाम्नायमाने मे प्रेम्णानायात्सुमानव ॥ 10 ॥
तस्मान्निस्सीम एवाह मत्स्वामी स्वस्थ साम्यदः । क स्वामी कस्य नि सीमत्व ददौ भस्मलेपवान्
॥ 11 ॥ मदाधिक्यात्त्वदाधिक्यं स्पष्टमेव च विठ्ठले । कुवादिनो मदैर्हीनाः सन्ति पश्यन्ति
देवना. ॥ 12 ॥ इत्यमेव हरिर्वित्त वादिभि. कृतमूलकै. । उक्तश्च जगतो नित्य पृथक्त्वेनैव
वर्तते ॥ 13 ॥ कृत्तमूलत्वमप्येषा कथत्विति न वित्तच ( भो ) । अर्भके गर्भ सत्येऽपि न्दर्भानु
ग्रस्त भानुवन् ॥ 14 ॥ तवार्भको दुर्भगो न शुभाना भूर्भविष्यति ॥ 14½ ॥

**2. विप्र प्रकरण** – ( 15–27½ )

इत्येक श्लोक मुख्य मे त्यक्तवानसि विप्रक ॥ 15 ॥ आकारस्थ लेखन च का[illegible] प्राड्भयेरिन्न् ।
अह मे किङ्करस्यापि विस्मृते. कि करोमि ते ॥ 16 ॥ नत्वहङ्कारमानी [illegible] निवारक ।
सहजा विस्मृति केन परिहर्तु सुशक्यते ॥ 17 ॥ सहसा परिहर्तु हि हरेरपि न शक्यते । शश्वद्वि-

 

स्मृति शीलस्य कस्मृनो विस्मृतिर्भवेत् ॥ 18 ॥ आमृति तव विप्रेन्द्र कामति त्यज मा भज । इति
पूर्व मया प्रोक्तमनुसन्धत्स्व बुद्धिमन् ॥ 19 ॥ वृद्ध श्रद्धान्वितो नित्य भजमा भुजगेश्वरन् ।
मानवा मानिन. सर्वे पापिन कोपिन. सदा ॥ 20 ॥ शश्वद्विस्मृति शीलश्च दु ख शीलश्च दुर्भग ।
इद गाली प्रदान तु नैव ह्यळिपदस्य ते ॥ 21 ॥ मत्पादाब्जे सदा चाब्ज भवस्य वलमीदृशम् ।
अलि त्व मम पादाब्जे कथ मे वागलभव ॥ 22 ॥ त्वन्मन. सन्निकृष्टतु मत्पदं सन्निकर्षते ।
तस्मान्मत्पादकमलध्यानात्ते निर्मलं मन. ॥ 23 ॥ नत्र चालोक्य सिध्यर्थं कुरु शीलवतां वर ।
पञ्च जन्ममु पञ्चास्यवन्मन्यो भव प्रिय ॥ 24 ॥ पञ्चास्य वाक्य संन्दिष्ट पुराण पञ्च
लक्षणम् । कुरु शीघ्र गुरूक्ति च न त्यज स्त्रोचिता रुचे ॥ 25 ॥ गृहीत्वा वक्ष्यते पक्षपातेन
सुविचक्षण । निखा गृहीत्वा वक्ष्यामि नत्रा त्व मप सर्वदा ॥ 26 ॥ सुखावासान्प्रदास्यामि
मखावासादपि प्रिय । इति पूर्व सदा प्रोक्तमनुसन्धत्स्व बुद्धिमन् । वृद्ध श्रद्धान्वितो नित्यं भजमा
भुजगेश्वरम् ॥ $27\frac{1}{2}$ ॥

### 3. शेष प्रकरण श्लोक – ( $28–36\frac{1}{2}$ )

ममाभिप्रायमज्ञात्वा प्रेन दूपयसीह मा ॥ 28 ॥ प्रीतवानस्म्यह तस्मै प्रोक्तवान्यो गुणान्मम ।
नैव पृच्छेति पूर्वोक्ति नैदमान त्वाबुद्धे (ध) ॥ 29 ॥ कनकानि समुद्दिश्य शौनकी ते मतिं त्यज ।
पूर्व तु भट्टाचार्यस्य भ्रष्टबुद्धे. कदाचन ॥ 30 ॥ नष्टासीत् दृष्टिरेकैव वेदाप्रमाण्य शङ्कया ।
तद्वत्कमलनाभस्य समलस्य सुदुर्मते ॥ 31 ॥ शमन चास सन्नेत्र दमन यास्यते यमात् ।
अथं न तम्मण. प्रेम्णा मद्वाणी भणते गुणिन् ॥ 32 ॥ काणवत्सरणी यायान्नाणते [illegible] ।
तत्फल प्राप्स्यते पुत्र सत्फलं नैव पश्यति ॥ 33 ॥ विप्र फल्गुतरश्चाय विप्रलिप्सुर्न सशय. ।
अनेक रूपवन्त मा विनैकतर रूपिणम् ॥ 34 ॥ मनाक्समनुते विद्वन् शौनको भुवि जायते ।
एव निः श्रीनिवासोऽयं श्रीनिवासाभिधोऽपि सन् ॥ 35 ॥ नि सीम मां न मनुते सुश्रीमन्तं कदाचन ।
नित्य ब्राह्मण सम्बन्धि सत्य वाक्य मयोदितम् ॥ 36 ॥ अत्यन्तं भ्रात बुद्धिश्च मन्तव्या तेन
मत्कृतिः ॥ $36\frac{1}{2}$ ॥

**4 विप्र प्रकरण श्लोक – ( 37-39½ )**

हे ब्राह्मणाधम गुणाधम भूघनाढचं मन्नन्दनं त्वनुदिनं गुणिन भजस्व ।। 37 ।। वृन्दावने मदन गोप सदायने मद्वाणी वदस्व वदनेन ददामि चान्नम् । मत्सत्र भोजनं भुङ्क्ष्व पुत्र मित्र कळत्रकै. ।। 38 ।। तत्र यात्रा न कृत्वा त्व यत्र चानादरस्तव । इथं ते दिव्य सद्बुद्धिः क्रुद्धोमा भव विप्रक ।। 39 ।। श्रद्धा हीन तु मद्वाणी न वदस्वाद्य चाधमम् ।

**5. विप्र प्रकरणे अवान्तर शेष प्रकरण ( 40-52 )**

त्वोत्तम सतीसूतिकाले चित्र कृत मया ।। 40 ।। पूर्वोक्त वाक्य सत्यार्थ सा पुत्री पुत्रक. कृत । अशेन पुस्त्व सिध्यर्थमहमेव सहासुभि ।। 41 ।। प्रविष्ट प्रतिरुद्ध तु विकृष्टे चाप्यमर्षित । प्रसूति काले वायुश्च पुर. स्थित्वा च कर्षति ।। 42 ।। इति मानान्तरादेव प्राप्त धर्म करोम्यहम् । कसेन बद्धदम्पत्यो र्यादवाना पति र्यथा ।। 43 ।। कसादि दैत्य युद्धार्थमाविरासीदह तथा । पूर्वतु वरदानेन करदान कराय च ।। 44 ।। स्मरदाश्रयदः सोह सर्वदानन्दने ऽर्भके । अर्भके गर्भ सस्थे ऽपि स्वर्भानुग्रस्त भानुवत् ।। 45 ।। तवार्भको दुर्भगो न शुभाना भूर्भविष्यति । इति पूर्व मया प्रोक्तमनुसन्धत्स्व बुद्धिमन् ।। 46 ।। तत्काले तच्छरीरेतु ह्यहमेव प्रविष्टवान् । पुनर्जीवांतरस्त-स्मिन् मत्स्थाने स्थापितस्त्वहो ।। 47 ।। य. कश्चित्पुण्य जीवस्तु सदा मा तपसाचरन् । ब्राह्मणो ऽह भविष्यामि स तु सस्थापित शिषो ।। 48 ।। तेन सम्पूजितो नित्यमशतः सवसाम्यहम् । पूर्वे ऽपि मम पादाब्ज भक्तो य शूद्रको ऽपि सन् ।। 49 ।। सम्पूज्य ब्राह्मण भक्त्या शद्रो ऽपि ब्राह्मणो भवेत् । इति पूर्वप्रमाणं तु ह्यनु सन्धत्स्व बुद्धिमन् ।। 50 ।। रङ्गनाथस्य दृष्टान्तमपि दत्वा त्वह सदा । नि सङ्गो नात्र सन्देहः सन्देहो नश्यते शमिन् ।। 51 ।। सशयात्मा नश्यतीति मानसिद्ध मिहोच्यते । श्वानयोर्नि सयात्याशु सशयी नात्र सशय. ।। 52 ।।

**6 पुन विप्र प्रकरणं श्लोक .– ( 53-79 )**

कृष्णाचार्य सुतः श्रीनिवासाचार्याभिधोपि सन् । नि सीम मा न मनुते सुश्रीमन्तमहोविधे ।। 53 ।।

तत्फलं पश्यते पुत्र सत्फल नैव पश्यति । स्वप्रसङ्गे सुचतुरो प्यभिमानी न चात्रभूत् ।। 54 ।।
मयापि जीवता भूमावनुभूत ज्वरादिकम् । भवरोगेण ग्रस्तस्य किन्त्विदं ज्वरपीडनम् ।। 55 ।।
इदानीमौषध मा सेवस्व त्व वृद्ध विप्रक । शिष्टान्यत्र गतान्याशु ज्वराणि न जरन्ति ते ।। 56 ।।
अपमृत्यु छिनायाशु मम पादोदक द्विज । विप्रान्तर मुखेनैतच्छृणु चित्र त्वकृत्रिमम् ।। 57 ।।
तव ज्वराणि यास्यन्तु तावत्पर्यन्त मेव च । न वदामि सुदामाग्र्य लेखकोप्यत्र नास्ति मे ।। 58 ।।
अद्यैव सो ऽपि शीघ्र तु आगमिष्यति श्रीपतिः । अथापि तव चारोग्य पर्यन्त नैव कथ्यते ।। 59 ।।
गवि प्रसव दु.खेन व्यथिताया सर्वै वृष. । बाधते ता तदा यागीर्नमा स्पृशतु लौकिकी ।। 60 ।।
प्रत्यक्षसिद्धापलाप प्रकुर्वन्ति प्रजा॰ कलौ । स्वमातृ प्रसवारभ्य प्रनष्ट प्राक्सुदृष्टयः ।। 61 ।।
मया परोक्षतश्चोक्त परलोकस्य वैभवम् । परोक्षज्ञान हीनास्ताः परिवाद प्रकुर्वने ।। 62 ।।
परेषा च श्रिय श्रुत्वा दह्यमाना इवाग्निना । अशक्तास्ता गति गन्तु ततो निन्दा प्रकुर्वते ।। 63 ।।
जनाः सुपापिन. सर्वे कलिनाविष्टचेतना । मनासि पापकृत्येषु स्वनाशाय प्रकुर्वते ।। 64 ।।
अह परोक्षतश्चैव वक्ष्ये नह्यपरोक्षत । देवाः परोक्षतश्चैव वदन्ते नापरोक्षत ।। 65 ।।
परोक्षेच प्रिया देवास्त्वपरोक्ष प्रिया नराः । उभयेच प्रिया दैत्या अप्रिया उभये च के ।। 66 ।।
तस्मात्परोक्ष निर्देश प्रियास्ते देवतांशका. । अपरोक्षस्य निर्देशे प्रियास्ते नृशरीरिण. ।। 67 ।।
उभयेपि प्रिया ये वै दैत्याशास्ते न सशय । तस्मान्मद्वचने ये च प्रियवन्तः प्रियाहि मे ।। 68 ।।
अप्रिया ये च पापास्तेह्यप्रिया. सर्वथा मम । तस्मान्मम प्रिया ये वै प्रीति कुर्वन्तु मत्कृतौ ।। 96 ।।
अप्रिय नैव कुर्वन्तु मत्प्रियास्ते न सशय. ।। 70 ।। यत्र प्रतीतार्थबाध स्तत्रान्तर्यामि सङ्ग्रह । कर्तव्य
इति पूर्वोक्तमनुसन्धत्स्व बुद्धिमन् ।। 71 ।। तस्मादुक्तार्थ बाधे सत्यन्तर्यामी हरि स्वय । करोति
घटना तस्य शक्ति दत्वा च तादृशीम् ।। 72 ।। तस्मान्न कार्या शूकापि शङ्कायाः शुष्कबुद्धिभिः ।
लोकवार्तापरै काकबुद्धिभि. नरकाप्तिभि ।। 73 ।। इय शङ्का च सर्वत्र कुतोवा जायते नृणाम् ।
विप्रस्यवा कृतिरियं मम वेत्यज्ञ सशयात् ।। 74 ।। सशयात्मा नश्यतीति मानसिद्ध विनाश(शि)न ।
श्वानयोनि व्रजत्याशु भुक्त्वा कीनाश यातनाम् ।। 75 ।। तस्मादज्ञानिनो हित्वा ज्ञानिभि सुयश-
स्विभि. । सन्मान मम चामुत्र ध्रियता मनसि स्फुटम् ।। 76 ।। मन्दाशङ्का मदान्धानामेव स्यान्नतु

ज्ञानिनाम् । ज्ञानप्रकाशने नष्टाज्ञानान्धतमसश्चते ॥ 77 ॥ तस्माज्ज्ञानी सदापूज्य पूज्यात्पूज्यतम स्मृत: । नैवाज्ञानी मानवाह्य कीनाश वशम. सदा ॥ 78 ॥ अज्ञानिना प्रसङ्गोय न कर्तव्यः सुखेप्सुभिः । श्वानेन सदृश मत्वा पापिन तं महात्मभि ॥ 79 ॥

5 लक्ष्मीप्रीति प्रकरण – ( 80–90 )

लक्ष्मीपते मम कृनि च स्मृता सभासु निशङ्क एव वद सादरमत्र नित्यम् । त्व न प्रिये प्रथमत प्रथिता च कृत्वा मत्प्रीतिनिनैव कृतनानसि वाचकेश ॥ 80 ॥ यस्य देवा न प्रसन्ना मुनयश्च तपोधना । गुरु सर्वार्थदश्चैव स हरि सागरालय ॥ 81 ॥ अस्मद्वृन्दावन तस्मै प्रसन्ना- च्छादितान्तिवन् । तद्भित्त्यन्तर्गत नैव स्वामिन स्मारयत्यहो ॥ 82 ॥ शिलामात्रामय विष्णो कलाभिश्च समन्वितम् । फलानि प्रतिदद्यान्मे मलानि प्रहरिष्यति ॥ 83 ॥ इति नस्मारय त्वेन च्छादद्द्रोषिणश्च ने । चोरवृत्या जीवतो वै नरकाननुगच्छत ॥ 84 ॥ अथ तु वासुदेवाख्य. कर्मन्दी तत्र मन्दिरे । मन्दराद्रि निभे वृन्दावने सम्पूज्य मा सदा ॥ 85 ॥ भीम हनूमन्तमनन्त लोकाचार्यं जगद्गुरुम् । अनन्ता तत्तनीप तु भुक्त्वायुष्य न शेषितम् ॥ 86 ॥ ममावमाने नाह तु तस्य सन्तस्यति दुःखित सुवासिनी पति यद्वद्वासुदेवाभिधो मुनि ॥ 87 ॥ तीर्थयात्रा तु कृत्वा च सार्थी कृत्वा कलेवरम् । नामवेक्ष्ये त्वागयातु सत्वायात. शुचार्दित । 88 ॥ दैवाद्वृन्दावनस्थस्य नान कृत्वा सर्वं मम । भीमादि सार्वभौमाना कामादिभिरतन्द्रित । 89 ॥ तेन पुण्येन पुण्यात्मा पुण्या गतिमवाप्स्यति । शाणवलीढमाणिक्यवत्स गौणीमवत्यजत् ॥ 90 ॥

6. द्विप्र प्रकरण ( 91–93 )

आदित्याद्भुत माहात्म्यमह हयमुख भजे । महिमा तस्य केनेह वर्णितु शक्यते विना । 91 ॥ तादृश हरिमाराध्य सर्वाराध्ये मयि द्विज । करादि स्पर्शने तेन कृते सति च मूर्धनि । 92 ॥ किमसम्भावित पूर्व चोक्त सम्भावित तत । असम्भावनया तस्माद्भव न पराहतम् ॥ 93 ॥

7. बहु पुरुष श्रोतृक प्रकरण (94–100)

हे पाप पुरुषा. सर्वे मारिप मा विजानथ । सौरे विषार्दितायूय पौरुषेण भविष्यथ ॥ 94 ॥

एकोवा वक्ति चेच्छ्लोक त्वेक मत्सम्मतार्थकम् । तर्ह्यय पुत्र नद्गेहे जलाद्याहरण चरेत् ।। 95 ।।
एकस्मिन्नहनि श्लोक सहस्र मदनुग्रहात् । वक्तव्य वाक्सहायेन ममेह प्रहरामि तत्।। 96 ।।
अहमप्यत्र वक्ष्यामि श्लोकान् य कश्चनाधम । वदन्निति वदेद्विप्र सदृशस्तु भवेदिह ।। 97 ।।
कृत्रिम श्लोक कर्तायो ह्यसूयासु परोनर. । मरिष्यत्यमरैः शप्तो निरये स चरिष्यति ।। 98 ।।
तस्मात्कुवादो दुर्वादिन्न कर्तव्य स्त्वयाधुना । यदा विधिबल जीर्ण तदा कर्तव्य एव ते ।। 99 ।।
तस्मादत्यद्भुतार्थाना श्लोकाना तु प्रवर्तक । करोमि शारदा सन्निधान जिह्वागत त्वहो ।। 100 ।।

**8 विप्र प्रकरणं** ( 101–107 )

हे वृद्ध विदुषा मध्ये श्रद्धा रहित पुरुषम् । विद्धि तल्लक्षणं वक्ष्ये मुण्डवद्विधवादित' ।। 101 ।।
विधवा दर्शनाद्भीतस्तथैक द्विज दर्शनात् । धवला स्न न मध्दस्मद्वृन्दावन सुदर्शने ।। 102 ।।
त्यक्तवान्वित्त लाभार्थं कृत्वा पाण्डित्यमप्यहो । अत्यन्त मानितो नासीत्कुजनै र्हास्यता गत ।। 103 ।।
त्रिलक्षगणित कृत्वा दक्षवन्मत्प्रदक्षिणम् । आशुगुक्षणिवत्पूर्वकर्मकक्षं क्षिणोत्यसौ ।। 104 ।।
तत्पाण्डित्य भयादेव हृदि कम्पित वादिन । दिक्षु धावन्ति ते शुष्कवदना क्रन्दन विना ।। 105 ।।
राजानो नैव जानन्ति मान तस्य न चक्रिरे । मम नन्दन पाण्डित्यानन्तरं सतु पण्डित ।। 106 ।।
मम नन्दन वैदुष्य तद्वैदुर्ष्य तथैव च । भविष्याज्ञानिना पोष्य मया सत्सु न सशय. ।। 107 ।।
एतत्सर्व स्वाप्नपद्येन गर्व हित्वा सर्वे विप्रवर्यास्त्यजेन । श्रुत्वा चोर्व्यां शर्व गुर्वादि देवान्
दृष्ट्वोर्वशी द्यान्तु मा मानवेन्द्रा ।। 108 ।। इद वृन्दावनाख्यानं ये पठन्ति मनीषिण । मुकुन्दावन
मेवास्तु तेषा कन्दाशनाज्ञया ।। 109 ।। इदनर्पित मेवास्तु हयशीर्षस्यपार्षदात् । समं सहस्रशीर्षस्य
सूक्तस्य पुरुषात्कृतम् ।। 110 ।। यच्छृण्वता भक्तिरुदार सद्गुणे हरौ हरे लोकगते तथा मयि ।
भवत्यहो सर्व शुभाप्ति सन्मती ददात्यजस्र सुत सत्यमेवतत् ।। 111 ।।

ॐ इति श्रीब्राह्मणस्वाप्नवृन्दावनाख्याने अलौकिक विभागे निदर्शन पर्वणि षोडशोऽध्याय. समाप्तः ।।

।। श्रीकृष्णार्पणमस्तु ।।

# अथ सप्तदशाध्यायः



**1 शेष भूप श्रीपति प्रकरणं** (1-18)

हरिः ॐ ॥ अय विप्र सुप्रशस्त मम पादाब्जमुत्तम । पश्यति स्वप्नकालेतु नित्यं निर्मल चेतनः
॥ 1 ॥ स तेन लब्धातिशयः शेषशायि प्रिये मयि । मन आवेश्य काश्या च मृतस्तत्पुण्य माप्नुयात्
॥ 2 ॥ तस्माद्विप्र. प्रशस्तोऽय प्रमृष्टज्ञानवान्मम । प्रकृत्या यत्प्रदातव्य तदस्मै सप्रदीयताम् ॥ 3 ॥
मयोक्त श्लोकार्थमपि न जानाति ह्यय द्विजः । अर्थ बुध्वा तु वाक्यतु करोतीह कवीश्वरः ॥ 4 ॥
तस्माद्विप्रकृतिर्नैव मत्कृति. सर्वथा सुत । सत्कृतिश्चास्य कर्तव्या त्वत्कृनिश्चाग्रपङ्क्तिका ॥ 5 ॥
मामाश्रित्य मया दत्तमाचार्यत्वं समाप्यच । मम वृन्दावनस्यैव नाम्ना समनुवर्तितम् ॥ 6 ॥
भोजनायान्न मेवात्र नास्तीति जनता मनाक् । मनुते किमन्नहीनेनाचार्यत्वेन नन्दच ( न ) ॥ 7 ॥
नागारव्य पण्डितस्यापि स्वप्ने चोक्त मया सुत । तेनापि न कृत किञ्चिन्मृषा वाक्य परोऽभवत्
॥ 8 ॥ तस्मात्त्वचान्नमात्रस्य यत्न कुरु सुमानव । नोचेत्समाधवी वृत्ति करिष्यत्येव नान्यथा
॥ 9 ॥ अह विप्रस्य सौचित्य करिष्यामीति मन्मतम् । सौचित्य कुरु कल्याण गुरोर्वाक्यस्य
गौरवात् ॥ 10 ॥ हे नन्दन त्व मम नन्दनेऽवने वृन्दावने कन्दपलाश मन्दिरे । सुनन्द नन्दादिभि-
रिन्दिरापति. स्वानन्ददो यद्वदिहाभवप्रिय. ॥ 11 ॥ तवेह कोवागणयेद्गुणौघान् विना तु मा
नास्ति सुनामधेय । यथा सुरेन्द्रस्य करीन्द्रगस्य गर्वोऽपि सर्वापहर सुतेह ॥ 12 ॥ औदार्यशस्त्रेण
विदार्य विप्रदारिद्र्यवृक्ष करदैरिह त्वम् । धरासुराद्यै परमादरेणत्वाराधित. सन् धरणी वृणीष्व
॥ 13 ॥ पिता पुत्र स्तुति कुर्याद्भर्ता भार्यास्तुति गुरुः । शिष्यस्य सस्तुतिं कुर्यात्स्वामीभृत्यस्तुति
तथा ॥ 14 ॥ तदन्तर्यामिण श्रीमन्नादाय परमार्थत । कुर्यात्स्तुति न दोषाय न तु देहाभिमानिन:
॥ 15 ॥ तस्मान्नन्दन ते चान्तर्यामिण. कन्दिना मया । क्रियते गुणवृन्देन मम वृन्दावने यथा
॥ 16 ॥ मयि जीवति यच्चोक्त मम वृन्दावनं सुत । भविष्यति प्रसिद्धं तदनु सन्धत्स्व बुद्धिमन्
॥ 17 ॥ तत्प्रसिध्यर्थमेवात्र तन्नामापि द्विजस्य तु । मया दत्त त्वया तस्मान्निग्राह्या न वदन्ति ये
॥ 18 ॥

### 2 विप्र प्रकरण श्लोक ($19-21\frac{1}{2}$)

हे विप्राद्याशन नास्ति पुत्र मित्र कळत्रकै. । कथ करोषि चान्नार्थ कुरु वृत्ति च माधवीम् ॥ 19 ॥ प्रतापत्रय मध्ये तु ह्येक वाप्यस्मदीयका । न प्रयच्छन्ति सच्छास्त्र वक्त्रे तव न सशय ॥ 20 ॥ अगन्ता गन्तु कामस्त्व घोष पर्यन्तमेवच । अशक्तः सन् कथ पुत्र पोषण तु भवेदिह ॥ 21 ॥ तवान्नसिद्धिपर्यन्त न वक्ष्ये मानवोत्तम॥ $21\frac{1}{2}$ ॥

### 3. श्रीपति प्रकरण ( 22 25 )

मान तत्याज माधव्या मानोहि महतां धनम् ॥ 22 ॥ मयोदित वच सत्य तस्य गेहेच पश्य वै । श्रीपते श्रीमतो वाक्य शृणु मे गुण भूषण ॥ 23 ॥ विप्र हस्ते प्रतापोपि नास्ति तद्गेहगा अपि । तण्डुलाश्च न सन्तीति वासुदेव मुनि वद ॥ 24 ॥ श्रीपते श्रीनिवासस्ते प्रसन्नोस्तु प्रभुः प्रिय । ब्राह्मणस्यान्नयत्नं त्व प्राप्तवान्वै ममान्नद ॥ 25 ॥

### 4 विप्र प्रकरण –( 26–37 )

विप्र त्व मास पर्यन्त वासुदेवाभिधं मुनिन् । स्मरन् भुङ्क्ष्व कर तस्मै दातु तव न विद्यते ॥ 26 ॥ मम नन्दन धर्मेणचान्नं त्व प्राप्तवानसि । पुण्य भवेत्तस्य पुत्रकळत्रै सहभोजनात्॥ 27 ॥ तस्यागमन पर्यन्त तात हीन सुतोपमः । ब्राह्मणासि सदागण्यगुण मा स्मर रक्षकम् ॥ 28 ॥ तवोदरे वेदनादि व्यधिर्निस्सारितो मया । त्वत्पुत्री प्रति तत्रापि मर्दित श्चित्रमेव तत् ॥ 29 ॥ तस्मात्सदानु सन्धानमेवमेवास्तु ते बुध । कदा यास्यति मे पुत्रश्चेति चिन्ता त्यज द्विज ॥ 30 ॥ ससाराब्धेश्चयन्नेतृ होतृवत्कर्मवारिधे. । क्षेत्रवत्पुत्रपौत्राणा नेत्र सज्ज्ञानमुच्यते ॥ 31 ॥ तन्नष्टमासीत् भ्रष्टे च शिष्टवल्लोकवञ्चके । तर्हि भट्टस्य दृष्टान्ते दार्ष्टान्तिक विरुद्धता ॥ 32 ॥ इतिचेन्नचतत्रापि दृष्टि शब्देन सौष्टवात् । विठ्ठल ज्ञानमेवाग्र्च स्पष्ट ग्राह्य न सशय ॥ 33 ॥ उभयाभिप्रायतश्च नेत्रशब्दार्थं उच्यते । उभयार्थेऽपि वाप्येक विषयेवा तथैव च ॥ 34 ॥ प्रामाण्यं मम वाक्यस्य ग्राह्य लोके विचक्षणैः । निर्गुणैः पुरुषै परुषवाक्यैर्न शृणु दूषणम् ॥ 35 ॥ अत एव पदं

नेत्र गृहीत नयनादिकम् । न गृहीत पद विद्वनुभयार्थस्य सङ्ग्रहे ।। 36 ।। तस्मान्नकार्या शङ्का च वञ्न्चकाना दुरात्मनाम् । शुनकात्म मतस्थानामतर्क्याणा दुरुक्तिभि ।। 37 ।।

5. **विप्र शिष्यतम्मण प्रकरणंम् :–** ( 38–42 )

हे तम्मण शृणुष्वाद्य भणस्व त्व **गुणाधम** । मद्वाणी श्लोक सुश्रेणी **ब्राह्मणेन** च वर्णिताम् ।। 38 ।। नोचेत्त्वा प्रति यास्यन्ति शीघ्रं तु यम किङ्कराः । मद्द्रोहकरमाराद्वै **शरणं** व्रज मां तत. ।। 39 ।। रदनैर्लोहितश्मश्रुकरालवदनैरपि । दमनैर्भीषयन्तस्त्वा दमनै भ्रंष्ट मानसम् ।। 40 ।। तदा मोचक एवाह सूचकैरति दोषिणम् । कीचकादतिदुर्बुद्धि शोचक मामक द्विजम् ।। 41 ।। तस्मान्मदुक्त मर्यादा मात्यज त्व द्विजाधम । वृन्दावनगत नित्य भज मा भुजगेश्वरम् ।। 42 ।।

6 **भूप प्रकरण श्लोक** – ( 43–52½ )

हे भूप भक्त शुभदेत्र भवे भवेच भक्ति कुरु त्वमपि ते च सुसौभगाय । वृन्दावने कदन कोविदचेति पूर्व केदारकाख्यमपि घोषमिह त्वजस्व ।। 43 ।। एव चेत्तवचायुष्य वृद्धिर्हि भविता सदा । समृद्धिर्धनधान्य च गजवाजिनृणामिह ।। 44 ।। तवाग्रजेन दत्तं वै धारा पूर्वं द्विजस्य च । द्विजेन मम दत्त च सम्मत्या तेऽग्रजन्मन ।। 45 ।। स्वदत्तात्द्विगुण पुण्य परदत्तानुपालने । परदत्तापहारेण स्वदत्त निष्फल भवेत् ।। 46 ।। स्वदत्ता परदत्ता वा यो हरेत वसुन्धराम् । षष्ठि वर्ष सहस्राणि विष्ठाया जायते क्रिमि ।। 47 ।। इति पूर्व **प्रमाणाभ्या** मद्वाक्यस्य च गौरवात् । त्यज राजन् सुभीरु सन् न भार तवचावनम् ।। 48 ।। भजराज्य धराभार हनत्व कनक नय । कोदा कोलाहलेनैव कुरु वृद्ध समृद्धिमन् ।। 49 ।। वैरिभि. प ौरवृद्धास्त्वं पूजयादत्स्व तैर्जयम् ।। 49½ ।।

**भूप प्रकरणान्तर्गत विप्र प्रकरण श्लोक** ( 50–51 )

इति त्व द्विज सार्धञ्च श्लोकद्वयमनुत्तमम् ।। 50 ।। त्यक्तवानसि तच्छोकच्छेदकोहं न सशय । तस्मादालस्य हेतोस्तु बहुहातु त्वमिच्छसि ।। 51 ।।

**पुन भूप विप्र प्रकरण श्लोक** .– ( 52–52½ )

समस्तधर्म रक्षार्थी राघवो राज्यहा परै । विप्रक्षेत्रापहारं तन्माकुरु त्व करानपि ।। 52 ।। नादत्स्व तव नाथश्च राज्य ते रक्षयिष्यति ।। 52½ ।।

**7. विप्र प्रकरण ( 53-57½ ) ( मृत्युपरिहार )**

हे शुण्ठ विप्र तव कण्ठगत च प्राण शौण्ठामि कुण्ठित गतेरहमेव शीघ्रम् । मन्मण्टप तव हृदन्तिकनञ्च मात्र मौत्कण्ठचतो यदविकुण्ठगते प्रिय तन् ॥ 53 ॥ तस्मात्प्राण नि सरन्त वारयामि वरेण्यकम् । मरण प्रहराम्येव शरण व्रज मा मुनिम् ॥ 54 ॥ शुण्ठेत्यत्र शु शब्देन शोको ग्राह्य· शुभस्यते ॥ 55 ॥ ठेतितच्छून्यएवायं कृष्ण भट्टाभिध पुरा । उच्यते मुच्यते रोगाद्दु खेन सुचरित्रिणा ॥ 56 ॥ प्रोच्यते चोत्तरग्रन्थः सौचित्येन मया ततः । पुरेति गुरुणैवेह मया दत्त नरैर्नते ॥ 57 ॥ आचार्यत्व स्थिर तस्मात्सर्वैरप्यनिवारितम् ॥ 57½ ॥

**8 सूर्यभट्ट प्रकरण श्लोक :– ( 58–59½ )**

हे सूर्यनाम धाराद्य सूर्यवत्सुप्रभान्वित ॥ 58 ॥ सूर्यवन्मम गूढार्थकृतिं सूरिजनेष्विह । प्रकाशय विकासन्ते मतयस्ते सकाशत. ॥ 59 ॥ वराकाअपि शोकार्ता निःशोकाश्च भवन्तु ते ॥ 59½ ॥

**9 लक्ष्मीपति प्रकरण श्लोक – ( 60–60½ )**

लक्ष्मीपते वदस्व त्व भूसुरोत्तम सूरणम् ॥ 60 ॥ कारण पुण्यराशीना वचन मम जानताम् ॥ 60½ ॥

**10. उपेन्द्र भट्ट श्री प्रकरण – ( 61–62½ )**

उपेन्द्र भट्ट ता शिष्ट कामधेनुरिति स्फुटम् ॥ 61 ॥ सर्वाभीष्टानि दातु ते पट्वी मत्कृतिका पठ । उपेन्द्रनामधेयाद्य कानधेनु रिव प्रिय ॥ 62 ॥ सर्वाभीप्सित दात्री मे वृन्दावन कृति वद ॥ 62½ ॥

**11. विप्र प्रकरणं श्लोक – (63–76½)**

कनका कृष्ण भट्टोऽपि कनकार्जन तत्परः ॥ 63 ॥ मनसा तृप्तिहीन. सन् मनाग्गच्छति गच्छति । हिरण्य भट्ट एवाय हिरण्यार्जन तत्पर ॥ 64 ॥ हिरण्य इव कारुण्य विषयोत्र बभूवह । सरसा भरती या वै तस्या नामधरोऽपि सन् ॥ 65 ॥ विरसोऽपि भवेदत्र नारसिंह्यो नराधमः । दाम्बली पित्तमौली द्वौ हरिनारायणावपि ॥ 66 ॥ ब्राह्मणाचार्य नामापि युक्तं वृन्दावनेन च । न वदन्तौ सुधान्तेषु ग्रन्थेषु कुशलाविव ॥ 67 ॥ मदवन्तौ मदान्धौ तौ मत्कृतौ भक्तिबाह्यकौ । इतः परं

जनाः सर्वे चौदासीन्य परा मयि ॥ 68 ॥ मत्कृति न वदन्त्यत्र पश्यन्तः पुत्र तत्फलम् । महत्पुण्य गुणाढ्यस्य भवतीह दिने दिने ॥ 69 ॥ लेखनाद्वाचनाल्लक्ष्मीपति भट्टस्य नन्दन । हे विप्र तवपुत्रस्य चरणाद्रौप्य भूषणम् ॥ 70 ॥ स्त्रीवश प्राप तद्धस्तादन्तकस्य वश गतम् । इत. पर न वक्ष्येह लौकिक वाप्यलौकिकम् ॥ 71 ॥ मत्तोकागम पर्यन्त काकबुद्धीन्जनान्प्रति । एको वदति विप्रस्य कृतिरेवेति सर्वथा ॥ 72 ॥ वरतो गुरु मुख्यस्य त वर प्राप्नुयाम्यहम् । पुनरेको वदत्येव लौकिक ब्राह्मणोदितम् ॥ 73 ॥ अलौकिकोक्ति मात्र तु गुरुणैवोदित हितत् । अय तु तम्मणो वक्ति बाणवत्प्राणघातक ॥ 74 ॥ ब्राह्मणोय स्वकार्पण्य कुतो वक्तीति निर्गुण । सर्वे वदन्ति दातार स्वकार्पण्य कदाचन ॥ 75 ॥ नादातार कुल श्रेयो हानि तु पुरुषे वृथा । तस्मान्ननिन्द्यत्वार्षेय पुरुषै. परुषोक्तिभि. ॥ 76 ॥ असूयाकारिभि श्रेयो हारिभि शापभीरुभिः ॥ $76\frac{1}{2}$ ॥

## 12 श्रीपति प्रकरण श्लोक ( $77–96\frac{1}{2}$ )

हे श्रीपते त्व च श्रमान्वितोऽसि श्रीदेवी ते सुप्रसन्नास्तु शश्वत् । सुतो न आयास्यतु तेन सूक्ष्म वासौऽवश्य दापयिष्ये सुशिश्य ॥ 77 ॥ अय वृद्ध स्तब्धएवाति व्याधिस्तब्धश्चासीन्मुग्धभावोऽपि तेन । हे बुद्धिमन् मत्कृते. सुप्रसिद्धि स्त्वया जाता विबुधेषु प्रधाना ॥ 78 ॥ मत्सख्याद्विप्र देहेतु मुख्यप्राण. स्थितोऽभवत् । सखा सार्धं मयाप्यत्र सुखावह गति प्रद ॥ 79 ॥ तस्मात्प्राणावधिर्विप्रे त्वेकश्चासीत्सुपुत्रक । द्वितीयावधि पर्यन्त मह वक्ष्ये ऽथवा न वा ॥ 80 ॥ यदिवा नैव वक्ष्यामि त्वल बुध्या कलौ युगे । तर्हि प्रतिज्ञाहान्यादि दोषो मम न विद्यते ॥ 81 ॥ प्रथमावधिमादाय प्रतिज्ञार्थोपपत्तित. । तस्मात्प्रतिज्ञाहानिर्वाप्यन्यथवा मम दूषणम् ॥ 82 ॥ नास्ति नास्ति न सन्देहो मधुसूदन शासनात् । तस्मान्निर्दोष एवाह यो दूषयति दोषयुक् ॥ 83 ॥ ब्राह्मणस्व कु (कृ) तो मन्नस्तदन्तर्यामिणो मम । गृणु लज्जाविहीनस्त्व कृणुमानं द्विजोत्तमे ॥ 84 ॥ इद तत्पुरत श्लोकं लोकाच्च च समक्षत । भेक वद्वद तच्छोक कारणं शतवारत ॥ 85 ॥ श्रवणानन्तर चित्र सुवर्ण निकषाश्मवत् । निर्णीयते स्वयोग्यत्व चरणीय रजो भज ॥ 86 ॥ मद्भूमि यो वहेद्विद्वानपि शीघ्र तु नश्यति । इन्युवाच यम श्रीमान्प्रतिमातर्णिडरात्मन. ॥ 87 ॥ तस्माल्लक्ष्मीपते भूमि याम्यां मादत्स्व साधिताम् । कदापि कोविदस्त्व हि मात्यजस्व बुधोदिताम् ॥ 88 ॥

मम पुत्रोऽपि मद्वाक्य विश्वासेन महामति । मया दत्तेन सन्नाम्ना (सन्मानात्) समाह्वयति ब्राह्मणम् ॥ 89 ॥ अय तु दाम्बळः पित्तमौळिरास्यात्प्रधूळिक । चन्द्रमौळि र्गले यद्वत् हृदि हालाहलान्वित ॥ 90 ॥ नारायणाह्वयोपीह तज्जिह्वानाह्वयत्यहो । मदुक्ताह्वयमप्यस्मिन् दह्येतासह्यवादिनी ॥ 91 ॥ भरण्यामागतोऽसि त्व धरण्या सातिनिन्दित । स्मरणीयश्च मत्पादो मरणार्तिहरस्तव ॥ 92 ॥ चिन्तामण्याह्वयाचार्य चिन्तामणिसमप्रभः । चिन्तामात्रेण तत्वार्थवेत्तारश्छन्दसामपि (कान्तार्थ वेत्तार श्छन्द सामपि) ॥ 93 ॥ श्रान्ताश्चाप्यरयस्ते वै भयात्कान्तारमाश्रिता. । अद्यापि मरणे चक्रुरापण पापकर्मणाम् ॥ 94 ॥ सर्वोपकरण तच्चाप्याचरच्च ऋण विना । एतादृश विनोदेन व्याख्यानादेनचान्विता. ॥ 95 ॥ तादृशानां नन्दनो नो वृन्दावन कृति वदेत् । लक्ष्मी-नारायणार्णोयमह्योमुग्वचन मम ॥ 96 ॥ सिह्लवद्वदतु ह्यत्र विना तैनचको महान् ॥ 96½ ॥

## 13 भक्त कृष्ण भट्ट प्रकरण (97–97½)

हे कृष्ण तात पुष्णामि भक्तो विष्णोर्मम प्रियः ॥ 97 ॥ निष्णाता यस्य तृष्णापि ससृतेनास्ति-चोष्णता ॥ 97½ ॥

## 14 सीतापति प्रकरण (98-99½)

तस्य सीतापते त्व हि जाडचता कामतिर्न ते ॥ 98 ॥ भक्तिर्मे मत्कृतौचास्ति गोपतिस्त्वत्सुतो यत । तस्मात्त्व जीवलोकेऽस्मिन् सञ्जीव शरदा शतम् ॥ 99 ॥ मञ्जीरध्वनिसयुक्त सञ्जाघर्ि सुतस्तव ॥ 99½ ॥

## 15. विठ्ठल प्रकरणं (100–102½)

हे विठ्ठल श्रेष्ठ भृत्य पट्टभद्रस्य मे स्फुटम् ॥ 100 ॥ स्वेष्टसुष्टु करोषि त्व ब्राह्मणेष्ट नचेष्टसे । ब्राह्मणोय प्रेत्यजातस्त्वपमृत्यु हराम्यहम्.॥ 101 ॥ तस्याभीप्सित कृत्य त्व कुरु तच्चभवेन्मम । एवचेदायुरारोग्य स्यात्काये तव सर्वदा ॥ 102 ॥ आयेनिर्विघ्नता स्यात्ते मायेव स्त्री भविष्यति ॥ 102½ ॥

**16 विप्र प्रकरण** (103–112)

इत्येक श्लोकमुख्य मे त्यक्तवानसि विप्रक ।। 103 ।। आकरस्थ लेखन च कारयप्राङ्मयेरितम् ।
शिष्येषु सस्थिताशेषगुणानेव मनीषिण. ।। 104 ।। पोषयन्ति तथा दोषरुपिण दूषयन्ति च ।
तस्माद्गुणिषु वक्तृत्व गुणाना दोषरूपिणाम् ।। 105 ।। अह परमहसोपि जनानां राजहसवत् ।
अहोवेत्ता दुर्जनाना सज्जनाना निरहताम् ।। 106 ।। क्षीरेच सारमेवाहं नीरेचासार मेवच ।
राजहसो यथा वेत्ति तथा पारम हंस्यग:।। 107 ।। भोसारासारयो मौनिन् वेत्तृत्व न तु दूषणम् ।
प्रत्युतास्य गुणश्रेष्ठ तद्वन्मम न दूषणम् ।। 108 ।। मम सत्सुच सन्तोषो जायते नत्वसत्सुच ।
हसस्य मानसे यद्वन्न वायस सरस्यहो ।। 109 ।। सन्त सत्सु प्रमोदन्ते न त्व सत्सु कदाचन ।
असत्सुच त्वसन्तश्च प्रमोदन्ते न सत्सुच ।। 110 ।। तस्माद्रागो भाग्य युक्ते दरिद्रे द्वेष एव च ।
विद्राविती मया मूर्न्धि दधाते मत्पदे सदा ।। 111 ।। तस्मादरागद्वेषोह विष्णो पादपराग भाक्
।। 112 ।। एतत्सर्वं स्वाप्नपद्येन गर्वं हित्वा सर्वे विप्रवर्यास्यजेन । श्रुत्वा चोर्व्यां शर्वं
गुर्वादिदेवान् दृष्ट्वोर्वशी यान्तु मा मानवेन्द्रा ।। 113 ।। इद वृन्दावनाख्यानं ये पठन्ति मनीषिण. ।
मुकुन्दावन मेवास्तु तेषा कन्दाशनाज्ञया ।। 114 ।। इदमर्पित मेवास्तु हयशीर्षस्य पार्षदात् ।
सम सहस्रशीर्षस्य सूक्तस्य पुरुषात्कृतम् ।। 115 ।। यच्छृण्वता भक्तिरुदार सद्गुणे हरौ हरे
र्लोकगने तथा मयि । भवत्यहो सर्व शुभाप्ति सन्मती र्ददात्यजस्र सुत सत्यमेवतत् ।। 116 ।।

ॐ इति श्री ब्राह्मण स्वाप्न वृन्दावनाख्याने अलौकिक विभागे निदर्शन पर्वणि प्रथम प्राणावधि प्रतिपादक सप्तदशाध्याय सम्पूर्णः ।।

।। श्रीकृष्णार्पणमस्तु ।।

# अथ अष्टादशाध्यायः

**1. विप्र प्रकरणं – ( 1–12 )**

हरिः ॐ ॥ इद सर्व शर्वगुर्विन्द्र पूर्वै गीर्वाणेन्द्रै गर्वराहित्य वद्धि । मर्वोत्तम पर्वणि पार्वतीयै मौर्व्यादिर्व्या राधित स्तत्कृत मे ॥ 1 ॥ मौर्व्यादिर्व्याराधित श्चेत्यस्यार्थं बुद्धि शौर्यताम् । गुर्व्या मुर्व्या विना को वाक्शौर्यवानपि वाचकः ॥ 2 ॥ विद्वत्सु बुद्धिचातुर्यरहित. स्वहितोपियः । नन्दनस्तु ममानन्द करिष्यन्व्याकरिष्यति ॥ 3 ॥ अस्यार्थं पश्यतां स्वस्य विदुषा कस्य वश्यता । हयग्रीवस्य सास्तीह तस्य सेवा सुसत्फलम् ॥ 4 ॥ तस्माद्वैविदुषा मध्ये विद्वान्मन्नन्दनस्य च । सदृशोनास्ति सादृश्य मम वृन्दावने यथा ॥ 5 ॥ आयातु मम पुत्रोसौ कायात्सुपरिणामवान् । माया तस्य सहायेच त्वायाता र्थप्रदायिनी ॥ 6 ॥ नन्दनस्तादृशो सौ मे वृन्दावन कृतिस्त्विमाम् । म.कुन्द जनता सेव्या मन्दानामपि तुष्टिदाम् ॥ 7 ॥ षोडशाध्यायिका कृत्वा एधमान द्विर्डपिताम् । करोतु जाड्य राहित्य जनानां गौडदेशिनाम् ॥ 8 ॥ कर्णाटक जनानां च कर्णश्राव्यं करिष्यति । अर्णवोत्थ मणिर्यद्वदर्णवेशायिन प्रिया(य) ॥ 9 ॥ औत्तराणा जनाना तु ससारोत्तारण भवेत् । उत्तम श्लोक गेहस्य चोत्तम द्वारयापकम् ॥ 10 ॥ चोलमण्डल देशीयै र्बालकैरपि नन्दन । कालेचाभ्यस्तमेवैतत्पालयिष्यति तानपि ॥ 11 ॥ नाना देशजनैरेवं नाना विद्या विशारदैः । नाना विधतया व्याख्या नाना शिष्यैष्वधिष्ठिता ॥ 12 ॥

**2. लक्ष्मीपति (शेष) प्रकरण सुषेणाग्रच इत्यारभ्य श्लोक ( 13–20 )**

भविष्यति सुषेणाग्रच मृषा नहि कुरुष्वतत् । षोडशाध्यायि निर्दोषं पोषयस्व ॠषेवंच ॥ 13 ॥
आषाढ मास पर्यन्त षोडशाध्याय मालिका । अस्तुश्रौषडिति प्रोक्ता क्रतुकोटि [illegible] ॥ 14 ॥
षोडशाध्याय पाठ तु य. करोति स तुष्टिभाक् । शिष्ट. सतु ममेष्टश्च मृष्टान्न लभतेनरः ॥ 15 ॥
द्वादशाध्याय पाठ वा यः करोति द्विजोत्तम. । सोप्यविद्वानपि स्वगे त्रिदशैः पूज्यते सदा ॥ 16 ॥
अष्टाध्यायस्य पाठ तु य. करोति ममेष्टकृत् । सविठ्ठल प्रियैः सर्वैरभीष्टैः पुष्टिमान् सदा ॥ 17 ॥
इदं सर्वं वद वृन्दावनाग्रे मन्नन्दने कन्दमन्दाशनस्य । वृन्दावने प्रीयतामिन्दिरेशो मन्नन्दनैचाहमेव

द्विजाद्य ।। 18 ।। इद तु नान्दीपद्य मे मन्दानामपि नन्दन । श्रुतमानन्दद नृणां नान्दी कर्मणि नान्यथा ।। 19 ।। इति श्रीत्यादि वाक्यानि मयानुक्तान्यपि प्रिय । प्रत्यध्याये प्रयोक्तव्यानीति संस्मर बुद्धिमन् ।। 20 ।।

### 3 विप्र प्रकरण ( 21-28 )

ब्राह्मण शृणु सवाद सुख्य प्राणस्य मे गूणिन् । तन्मतं देहमुत्सृज्य गमिष्यामीति मन्मतम् ।। 21 ।।
मामेति माधवेनोक्तो मत्कृते माधवस्तदा । मासि मासि महात्मा स मातृवत्त्वा न तु त्यजेत् ।। 22 ।।
ऊर्ध्व प्राण चोन्नमयत्यपान प्रत्यगस्यति । मध्ये वामनमासीन विश्वेदेवा उपासते ।। 23 ।।
इति पूर्ववदेवाय देहस्ते मत्कृत. कृतिन् । मया जीवित एव त्व मत्कृति स्मर विप्रक ।। 24 ।।
कर्तुचाकर्तुमप्येव मन्यथा कर्तुमेव च । समर्थीह न सन्देहश्चेश्वरस्य सदाज्ञया ।। 25 ।।
इति पूर्व मया प्रोक्त मनुसन्धत्स्व बुद्धिमन् । अन्यथा देहहानि तु पश्यसि त्व न सशय. ।। 26 ।।
तत्ते मद्दत्तमायुष्य वृद्ध त्व जीव तेन च । वृद्ध त्वं जीवयानीह दग्धमौत्तर गर्भगम् ।। 27 ।।
परीक्षित कुरुक्षेत्रे यथा लक्ष्मीपति. क्षितौ । क्षणाद्रक्षितवान्पक्षपातेन सुविचक्षणः ।। 28 ।।

### 4. शेष प्रकरण श्लोक – ( 29-38 )

मद्दत्त जीवन यद्वृणबन्धन मोचनम् । भविता मे नन्दनस्य चरणद्वन्द्व वन्दनम् ।। 29 ।।
कराभ्या शिरसाप्यत्र कुरु विप्र सुगौरवात् । वराभ्या वरसार तमिहामुत्रार्थद गुरुम् ।। 30 ।।
तस्माद्दृण विनिर्मुक्तो मरणेनापि ब्राह्मण । स्मरण मे चरणयोः पौराणिक सदा कुरु ।। 31 ।।
अह सर्यमिनी गत्वा दमनी ( ना ) य सुपापिनाम् । कमनीय तु मा तेषा सुमनोभि समन्वितय्
।। 32 ।। दर्शयित्वा च तत्पापं कर्शयित्वा सुदर्शनै । परशुच्छेदनं तेषा मर्शयित्वा सुकर्षये ।। 33 ।।
एव संयमिनीवास दमनीय सुपापिनाम् । शमनाय तदा तेषा गमनाय मनस्त्वभूत् ।। 34 ।।
यमोऽपि मा तदा प्राह त्वां ये निन्दन्ति मानवा. । तान्नैव मुञ्चामि धीमन् ब्रह्मकल्प क्षयेप्यहम्
।। 35 ।। वृन्दावन कृतौचोक्त महिमा घटते न ते । इति ये कथयन्तीह न मुञ्चाम्याततायिन
।। 36 ।। येन वृन्दावनाख्याति र्जाताचात्र दिने दिने । तस्मै नन्दन धान्यं वा धनवा किं न दीयते

॥ 37 ॥ मत्करादागत वित्त तस्मै दत्वा तु पोषय । तोषयाधि दिनारभ्य यद्वा पुण्य दिने मम ॥ 38 ॥

5 **विप्र प्रकरण श्लोक** (39-43)

हे विप्र कविवृत्तेन श्लोकेनतु ममाग्रत. । नृत्त कुरु सुवृत्तेन वित्त तव भविष्यति ॥ 39 ॥ एव क्रमेणचाध्यायानागतः कुरुनन्दन । पूर्वस्मिन्वै परिच्छेदे शीघ्र पञ्चदशैवतु ॥ 40 ॥ पूर्वे दिग्विजय कृत्वा भीमसेनो यथा मखम् । चकार राजसूय च कुरु नन्दन एवच ॥ 41 ॥ तद्वद्दिग्विजय कृत्वा चाग(ग्र)त. कुरु नन्दन । अध्याया स्तव तद्वत् स्याद्राजसूय फल महत् ॥ 42 ॥ इत्यभिप्रायतत्वोक्ति कुरुनन्दन तत्पदम् । यत्फल भीमसेनस्य तद्वैस्यात्तवनान्यथा ॥ 43 ॥

6 **हयग्रीव कर्मन्दि प्रकरण श्लोक** – ( 44-50½ )

हयकन्धर सन्नामधर विद्वद्धुरन्धर । कर्मन्दीश्वर मद्वृन्दावन मन्दिरग हरिम् ॥ 44 ॥ भज तद्धयकन्धर सन्नामधर विद्वद्धुरन्धर । द्विजे सुजनता पश्य भजते निज सेवया ॥ 45 ॥ वृन्दावन कृतौ जक मां च त्यज दुर्जनसङ्गतिम् । इति ते सशयो मास्तु यमोक्त शृणु तत्रच ॥ 46 ॥ हयकन्धर नाम धेय चोक्तमहिमा घटते न वा । हे हयग्रीव कर्मन्दिन् तव जय विद्वज्जयाङ्कुर । दुर्वादीभ महासिह्म दु सिद्धान्तच दु सहम् ॥ 47 ॥ अहं जानामि ते नाम ममनाथस्य सुन्दर विग्रह । मम सन्दर्शनादेव ह्यभूदानन्द विग्रहः ॥ 48 ॥ मम वृन्दावनाख्यान तव सुन्दर मानितम् । तेन मन्नन्दनादीना मान्यस्त्वं नात्र सशय. ॥ 49 ॥ तेन ने भविता श्रेय के न यास्थन्त्युकर्णतः । मन्नन्दनवदेव त्व नन्दयन्मा शृणुष्वतत् ॥ 50 ॥ पस्थितम् ॥ 50½ ॥

7 **विठ्ठल प्रकरण श्लोक** ( 51-55 )

हे पय. फेनवच्छुभ्रकीर्तिमन्मे मन प्रिय ॥ 51 ॥ विप्रोयं त्वत्करे दत्तो मया पुत्र इवप्रियः । तच्छिशो क्षीरपानार्थ गातु दापय भूपतेः ॥ 52 ॥ स्वस्य पुत्रोपि नास्त्यत्र कस्य वक्ष्ये रुज द्विज ( जे ) । पश्य विप्रोऽद्यान्नशून्यो नश्यते चास्मदाश्रयी ॥ 53 ॥ मत्पुत्रागमपर्यन्त त्वत्पुत्रोय न सशय. । तत्पुत्रक्षीरपानार्थ सत्प्रभो गा प्रदापय ॥ 54 ॥ एवचेत्तव चा पुण्यवृद्धिर्हि भविता सदा । कविता विप्रके नास्ति सविता वेत्ति सर्वथा (दा) ॥ 55 ॥

8 नारसिंह्म प्रकरण श्लोक – ( 56–74 )
नारसिंह्म नरश्रेष्ठ यथा सरस भारती। तवजिह्वाग्रगा तद्व द्वृन्दावन कृतिर्भवेत् ॥ 56 ॥
नारसिंह्म नरश्रेष्ठ नरके रविनन्दन। आह यद्वचन चाग्रे हयग्रीव मुनि वद ॥ 57 ॥
भूपःसमद्धनमादाय पाप्मान पोपयत्रहो। दोषोपि मम नास्त्येव शेषशापि पदेशपे ॥ 58 ॥
शेषाद्रिपण्डिनः पापशेषात्स्वस्य सुचक्षुष। शोषकस्त्वयमेवासीत्त्वद्द्रोहाच्च विशेषत ॥ 59 ॥
यथाच द्रुपदो द्रोणद्रोहन समुपद्रु। । सुभद्रापतिना दृप्त स्तद्रोपपरिमर्दित. ॥ 60 ॥
तच्छिष्यैरेव पाञ्चाल शोषितस्तृषितो यथा। तद्वत्त्वच्छिष्यतश्चाय शेषाद्रि शो ( शे ) षितोऽभवत्
॥ 61 ॥ तस्मात्त्वमेव त प प मोचयाद्य सुशोच्यताम्। गत कुचोद्यकृद्धिश्च ह्यनाथ न (त) समुद्धर ॥ 62 ॥ नह जानामि ते मानिन् तेन जातमनादरम्। गुना अमानता प्राप्त कुमानय गति मनाक् ॥ 63 ॥ वह्यधिक्करणात्ते वै निम्नं दुख मवाप्तनान्। ह्यनहृष्टो यथा द्रोण विरोधान्मृति दुखभाक् ॥ 64 ॥ व्यत्यस्तनामनम्तस्मिन् मतिव्यत्यास एवच। गृहीतस्तद्व्यत-स्मिन्व्यत्यस्त मतिरप्यभूत् ॥65 ॥ तथा हि लोके मर्त्यानां कलिनाविष्ट तेषाम्। विनाश काले सम्प्राप्ते तन्मतिश्चाल्पिता भवेत् ॥ 66 ॥ तस्मात्तत्कलिना सर्वं कृतमन्तर्निवासिना। स्वाज्ञानाद्विति मत्वाच ह्यनाथ त समुद्धर ॥ 67 ॥ हयास्य नामधेयिनो प्रकाश्य मेव मे प्रियम्। वृथारम्भो भवते वच कृपान्य तत्र जायते ॥ 68 ॥ अतो मयोदित हि यत्सुतोदितं यथा तथा। वृथा न जायते कृतिन् भवत्यवश्य मेवतन् ॥ 69 ॥ सुतोपि मे प्रवक्ष्यते तवानुमत्यनुव्रत। इहागत श्रुत मनोज्ञ मन्मतं कुरुष्व तत् ॥ 70 ॥ इत्थ मयोक्तमेवैतन्नविप्रोक्त कदाचन। कथ ते भविता चित्ते विप्रोक्त ममवा कृति ॥ 71 ॥ सशय वदविद्वस्ते मदवज्ञानतो भवेत्। मदवज्ञा महत्पाप त्रिदिवा-त्पातयत्यध ॥ 72 ॥ स्वैर गुरूक्त कुरु मारदूर धीर त्वरन्पौरजनप्रियार्थं। स्मरन्मुरारेः परमार्थ सार नलत्कृत सस्मर सज्जनाग्र्य ॥ 73 ॥ हं मौद्गल नारसिंह्म तत्र उन्नत सेवया। माभूत्कलत्र पुत्राणा हरिष्ये म्लेच्छबन्धनम् ॥ 74 ॥

9. विप्र प्रकरणं श्लोक – ( 75–77 )
मुग्धेति सबोध्य मया दुग्धवारिधिरीरित.। दग्धजिह्ववदेव त्वं स्तब्ध वृद्धेति भापसे 75 ॥

किं करोमि तवाज्ञायाहंकरोम्यज्ञतान्तकः । अहङ्कारेण हीनं त्वां य करेणाभिमर्शये ॥ 76 ॥
मत्कर स्पर्शन विप्र त्वच्छिरस्यतिसत्कृतम् । तत्कृच्छ्र हरते नित्य यत्कृत त्वज्ञतार्पकम् ॥ 77 ॥

**10. मौद्गल नारनिह्य प्रकरण श्लोक (78–81)**

द्वे सहस्रेच पद्यानां खद्योतोपम तेजसाम् । देहिना बोधनोद्दाम साधन तु भविष्यति । 78 ॥
तावत्पर्यन्तमेवाह वक्ष्ये पक्षीकृत द्विजात् । यावत्तद्य सहस्रे द्वे पूर्णे सुत भविष्यत. ॥ 79 ॥ तदनन्तर
मेवाह यथा मन्वन्तरे तथा । अनन्तशयन दृष्ट्वा ह्यनन्त सुखमाप्नुयाम् ॥ 80 ॥ तत ऊर्ध्वं
प्रवक्ष्यामि न वक्ष्याम्यथवाक्षणम् । न शिक्षयामि प्रेक्षावत्प्रवृत्ति लक्षयाम्यहम् ॥ 81 ॥

**11 हयग्रीव मुनि प्रकरणं – ( 82–85 )**

हयकन्धर कर्मन्दिन्जयकन्धरभे दिने । नत कन्धर पद्याना शतक वद ब्राह्मणे ॥ 82 ॥ स्नेह कुरु
मम स्नेहपात्रे शास्त्रज्ञसज्जने । मत्सुतोप्यति सुस्नेह करोति पुरुषोत्तम ॥ 83 ॥ विप्रोयं कृत्रिमो
भृत्यो मम नैव सुमानव. । पुत्रवत्पोष्य एवासौ मात्मज त्व द्विजोत्तमम् ॥ 84 ॥ मत्पुत्रेण वि[illegible]
विप्र तत्र तत्र कृत मड्त् । न शोभते शुभ कर्म दैव भदैवत नवा ॥ 85 ॥

**12. बहुभक्त श्री प्रकरणं श्लोक –( 86-96 )**

मन्नन्दनेन कर्मन्दीश्वरेणाद्य विना कृते । कर्मण्यानन्दरूपेऽपि ममानन्दो न जायते ॥ 86 ॥ [illegible]
गारवदेवेद नगरं शून्यमेव च । त विना नगरं यद्वद्दिवा दिनकरेण वा ( च ) ॥ 87 ॥
तदागमन सिध्यर्थं मन्मनोरथ सारथिम् । प्रेषयापि तमाहर्तु शीघ्रगामिनमध्वनि ॥ 88 ॥
सोपि गत्वा तु गोविन्द सङ्कल्परथमेवच । आरोप्य भूप प्रभृति भृत्यवाश्च संयुतन् ॥ 89 ॥
आनयिष्यति मानार्हं कृष्ण दानपतिर्यथा । मधुरा सोदर युत तद्वत्सोदापुरी पु (त) तम् ॥ 90 ॥
द्वारकावासिनं कृष्ण मधुरापुरवासिन । सदारा पूजयन्तिस्म सुदामोदार मुक्तिद । ॥ 91 ॥
तद्वन्मन्नन्दनमपि नन्दनै सहिता नरा. । निन्दन्तश्चात्मपापानि सानन्द पूजयन्त्यहो ॥ 92 ॥ [illegible]
पुरे वसन्तो ये सदाराः प्रत्युपस्थिता । उदार गुण सम्पन्ना सदा रयिविवर्धकाः ॥ 93 ॥ [illegible]
सुतेप्यत्रचागते स्वागतोक्तिभि । पूजयिष्यन्ति सन्तस्ते तान्दृष्ट्वा तोषितोस्म्यहम् ॥ 94 ॥ पुत्र

सङ्कल्पसिद्ध मा कल्पयन्ति मनीषिण. । स्वल्पापराधोपि मम महापापाय कल्प्यते (ल्प) ते ।। 95 ।।
तस्मान्मन्नन्दन मा च नैव द्रुह्यथ मामका. । दामोदर प्रिय मत्वा कामति त्यजथाशुच ।। 96 ।।

**13. विप्र प्रकरण श्लोक – ( 97–104 )**

तस्थिवा सीति मे प्रोक्ते तस्थुषा सीति चोच्यते । विप्र स्वस्थाश्च तेऽस्थीन्वै करिष्ये शिथिलानहम् ।। 97 ।। ममास्थिनिचये विप्र क्लीबशब्दः प्रयोजितः । तवास्थिष्विह पुल्लिड्ग शब्द प्रायः प्रयोजित. ।। 98 ।। कोवाभिप्राय इत्युक्ते वक्ष्ये अभिप्रायमञ्जसा । ममास्थीन्यपि कृष्णस्य शड्खचक्राङ्कितानिच ।। 99 ।। पुन. ससृति दातृत्व शक्ति हीनानि मानव । जातान्यत्यन्त शैथिल्यात् क्लीबशब्द प्रयोजितः ।। 100 ।। एतस्य वैपरीत्येन तवास्थि निचयेपिच । पुन ससृति दातृत्व सामर्थ्यात्पुस्त्वमेव हि ।। 101 ।। अत पुल्लिड्गशब्दस्तु प्रायो विप्र प्रयोजित । यद्वा शब्द द्वयेनापि वाच्यत्व तूच्यते मया ।। 102 ।। नैघण्टिक शृणुष्वाद्य विद्वत्कण्ठीरवेणच । अतोऽज्ञतापि नास्त्येव मम मानव धीमत ।। 103 ।। कामति त्यज ते विद्वन् भज मत्पादमेवच ।। 104 ।। एतत्सर्व स्वाप्तपद्येन गर्व हित्वा सर्वे विप्रवर्यास्यजेन । श्रुत्वा चोर्व्यां शर्वगुर्वादि देवान्दृष्ट्वोर्वशी यान्तु मा मानवेन्द्रा ।। 105 ।। इद वृन्दावनाख्यान ये पठन्ति मनीषिण । मुकुन्दावनमेवास्तु तेषा कन्दाशनाज्ञया ।। 109 ।। इदमर्पित मेवास्तु हयशीर्षस्य पार्षदात् । सम सहस्रशीर्षस्य सूक्तस्य पुरुषात्कृतम् ।। 107 ।। यच्छृण्वता भक्तिरुदार सद्गुणे हरौ हरे र्लोकगते तथा मयि । भवत्यहो सर्व शुभाप्ति सन्मती र्ददात्यजस्र सुत सत्यमेव तत् ।। 108 ।।

ॐ इति श्रीब्राह्मणस्वाप्न वृन्दावनाख्याने निदर्शन पर्वणि द्वितीय प्राणावधौ प्रथमाध्यायात्मक अष्टादशाध्याय सम्पूर्ण ।।

।। श्रीकृष्णार्पणमस्तु ।।

# अथ एकोनविंशोऽध्यायः



**1. विप्र प्रकरण श्लोक- ( 1-3 )**

हरिः ॐ ।। हे ब्राह्मण त्व शृणु मे सुवाणी कार्पण्यभाव न भणाद्य धीमन् । गुणैर्विहीनस्य गणाद्धि चान्न गृहाण सुब्राह्मण सद्गृहस्थैः ।। 1 ।। भोज्यवित्तं प्रदत्वातु ऋणान्मुक्त. शनैः शनै. । भोजनार्थं मधुकरवृत्ति कुरु यथा पुरा ।। 2 ।। इतिपूर्व मया प्रोक्तमनुसन्धस्त्व बुद्धिमन् । वृन्दावने च मत्सेवा मा त्यज त्व द्विजोत्तम ।। 3 ।।

**2 अप्पण्ण कृष्ण भट्ट प्रकरण श्लोक – ( 4-14½ )**

लज्जाविहीन कुब्जायाः पतेर्नाम्न. प्रभञ्जन । त्वज्जातिधर्ममनृत मा त्यजाद्यापि दुर्जन ।। 4 ।। वृन्दावनाचार्यनाम्ना त्व निन्दावचनादिना । तथा लक्ष्मीपतिर्नापि कविन्ना वेत्ति सर्वथा ।। 5 ।। सविता वेत्ति (चेति) तत्सर्व कर्मसाक्षी तवाप्यहो । मम मातु कृते श्राद्धे भोक्ता त्व गर्भिणीपति. ।। 6 ।। वैपरीत्येनोभयतः श्रीवत्स धृतवानसि । अन्यक्षेत्रे कृत पापं पुण्यक्षेत्रे विनश्यति ।। 7 ।। पुण्यक्षेत्रे कृत पाप कृष्णक्षेत्रे विनश्यति । कृष्णक्षेत्रे कृत पाप वज्रलेपो भविष्यति ।। 8 ।। तादृशे कृष्णगेहे त्व मृषा वचनमब्रवी । इत्याद्या बहवोदोषास्त्वयि सन्ति कृतान्तक ।। 9 ।। अत एवहि सन्तानरहितोऽसि कुलान्तक । काकोदरेत्यादि श्लोकत्रयोक्तान्सुदुर्गुणान् ।। 10 ।। गुणाधम शृणुष्वाद्य तूष्णी तिष्ठ ममाग्रत । इदमप्यमुतश्चोक्त कुमति नंतु तेष्य ह्णे ।। 11 ।। सुमति. स्वमते नास्ति सुमत मम जानते । तासा स्त्रीणा यथा योग फल भवति ब्राह्मण ।। 12 ।। रथरोधनकर्तृणा पूर्वकर्मानुरोधनात् । प्रत्येक फलवक्तृत्वे तत्तत्कर्माख्यशैवलै ।। 13 ।। स्त्रीनीराणि परिच्छिन्नानीति तद्धानिनैवहि । अतः सामान्यतो योग्य फल भवति नान्यथा ।। 14 ।। का मान्यता विना पुत्र स्त्रीणा श्रीमान्यथा ( या ) श्रिया ।। 14½ ।।

**3 लक्ष्मीपति प्रकरण ( 15 22½ )**

ममैव दैविक ग्रन्थ हृदय ग्रन्थि सयुताः ।। 15 ।। ये न गृह्णन्ति तान्सर्वान् गृह्णन्ति यमकिङ्करा. । ममाख्यानप्रवक्तार यमाज्ञया गता भटा. ।। 16 ।। ते मया वारिता. सर्वे को वा मत्सदृशो यतिः ।

हेवृन्दावनगस्वामिन् ममानान्दं कुरु प्रभो ।। 17 ।। अन्न ददस्व विप्रस्य मन्नन्दन मुखेन च। नोचेत्तवकर विप्रे वितरार्यं हरे गुरो ।। 18 ।। शरणागत ससरण मरणार्तिं हर प्रिय। एकवाक्य प्रतिष्ठापनाचार्यांद्य त्वयोदितम् ।। 19 ।। गा दापयामीति भूपात्सम कुरु यथेष्टत.। त्रिवाचापि मया प्रोक्त तवबुद्धि यथातथा ।। 20 ।। कुरु विप्रस्यवचन न मृषेति विचिन्तय। अनृत तु प्रवक्तारो वैराग्यरहिताश्चये ।। 21 ।। चरण तच्छिरसि ते कुरु तामरसोपमम्। श्रेयासि तव दास्यामि हयास्याराधन कुरु ।। 22 ।। आशा ते यान्ति पापानि स्वाशा त्यक्वा त्वयि प्रिय ।। $22\frac{1}{2}$ ।।

**4. श्रीपति प्रकरण श्लोक ( $23-25\frac{1}{2}$ )**

समागतोसि श्रीपते त्वमागत सरोवरम् ।। 23 ।। सुमानस यतीश्वर प्रपा वदाशु मत्कृते। हयास्य-नामधेयिनो मयास्य चोदितो मनु ।। 24 ।। कुहास्य वर्जितो मुनिः सुहासमिश्रितानन.। मानस राजहसीव मत्सरोवरमागतम् ।। 25 ।। मत्कथाक्षीरपान तु मामक त प्रकार (श) य ।। $25\frac{1}{2}$ ।।

**5 हयग्रीव क प्रकरण श्लोक :– ( $26-29\frac{1}{2}$ )**

हे हयग्रीवकर्मन्दिन्मन्दराद्रिनिभं मम ।। 26 ।। वृन्दावन पश्य सान्द्रानन्द युक्तो भवाशुच। मत्मरोवर मायासि राजहसीव मानसम् ।। 27 ।। मत्कथाक्षीरपानं त्व स्नान कृत्वा कुरु प्रिय। हसो यथा क्षीरपान कुरुते नीरक विना ।। 28 ।। तद्वदहोनाम नीररहित मत्कथामृतम्। पिब पापहर कोप-रहितश्चेत्सुपावनम् ।। 29 ।। तपसा पापपूग त्वमपाकुरु पुरो मम ।। $29\frac{1}{2}$ ।।

**6 शेष प्रकरणं ( $30-35\frac{1}{2}$ )**

नन्दनाय मन्दबुद्धि· कन्दाशन कृति परम् ।। 30 ।। वृन्दावने सान्द्रभक्त्याह्यधरस्य (स्प) न्दना-दिना। दिने दिने वदत्येव कदनेन विना जनै ।। 31 ।। मदनेनापि (भि) हीनोऽय सदन तस्य दापय। त्वत्करे चार्पितोय तु मत्कर तस्य दापय ।। 32 ।। सत्कार कुरु विप्रेच मत्कृतिप्रार्पकेत्रच। कृष्णाचार्य सुतश्चाय निष्णातो हरिपादयो. ।। 33 ।। पुष्णाति वेदशास्त्राणि तृष्णाथापि गता न हि। सोत्यन्ततृष्णया युक्त कृष्णसङ्कल्पतः सुत ।। 34 ।। वैष्णव ब्राह्मणाश्चोष्ण करवत्परितापितान्। कुरुते निष्ठुरवच· किरणै स्मरण विना ।। 35 ।। ब्रह्मधिक्करण चास्य मरणार्ति सम भवेत् ।। $35\frac{1}{2}$ ।।

**7 सीतापति प्रकरण** (36-42½)

अय ग्रामो बहुल ब्राह्मणेभ्यो नाम्ना सपेसरु रित्थ प्रदत्त । राज्ञा दत्त शेषहस्ते शेषस्तदाज्ञया दत्तवान्विप्रहस्ते ॥ 36 ॥ यस्मिन्दत्तं दानमानन्त्यमेव ददाति पुण्यस्य च किञ्चनापि । तस्मिन् दिने श्रवण द्वादशीति शासनस्थं प्रददौ द्विजेभ्य ॥ 37 ॥ वामने नेक्षित ग्राम शासनस्थ मुनीश्वर ॥ 38 ॥ न प्रयच्छन्ति विप्रेभ्यो राजान के वदस्व तान् । हा हा कोपीह राजान त्यज ग्रामं द्विजातिनाम् ॥ 39 ॥ इति पुण्योक्तिमुक्त्वा तु ब्राह्मणार्थ न जीवति । ये जीवन्तीति विप्रार्थं ते जीवन्त्येव नेतरे ॥ 40 ॥ स्वार्थं जीवन्ति कान्तारे किराता. किं न निर्दया । तस्मात्त्यजेति राजान द्विजग्राम तु सज्जन ॥ 41 ॥ त्यज जीव समाजे त्व भज तत्पुण्य सञ्चयम् । वाङ्मात्रेण च तत्पुण्यराशि पश्य गुणार्णव ॥ 42 ॥ त्व मेरुणा सम पुण्यमादत्स्व कृणुष्व तत् ॥ 42½ ॥

**8. श्रीपति प्रकरणं श्लोक** – ( 43–50½ )

श्रीपते श्रीनिवासोय वृथा गाली प्रदत्तवान् ॥ 43 ॥ ता श्रुत्वा यत्तयोपीह मूकी भूता अहोविधे । कालीयः स्वविषज्वालाज्वलित यमुना जलम् ॥ 44 ॥ चकार निर्मल काले गोपालेनैव चालित । तद्वद्गोपालकृष्णेन मद्वृन्दावनगेन च ॥ 45 ॥ सद्वन्दनादिभिः शून्यं वदनं भुवि निन्दितम् । तस्मिन् ब्रह्मन् ब्रह्मनिन्दादोषेण ब्रह्मराक्षस. ॥ 46 ॥ बह्वीः समा महावह्निसन्तप्त इव तप्यते । बह्वी. समा इति श्रुत्या चांहो नाश करिष्यति ॥ 47 ॥ असह्यमपि यच्छ्रीनिवासो गह्वरमध्यग. । तत्कृतब्रह्मनिन्दाया. मद्वृन्दावन सन्निधौ ॥ 48 ॥ कन्दाशनेन्द्र मनसो दन्दशूक प्रधारिणः । अर्पित शल्यमासीत्सन्तर्पितं रक्तपानत ॥ 49 ॥ न्यत्कृता साच विद्वद्भिर्धिक्कृत. सोपि निन्दकः । ब्रह्महिंसा सम पापं ब्रह्मधिक्करणे ऋणिन् ॥ 50 ॥ मरणार्ति समं नृणां करणं तस्य मात (न) व ॥ 50½ ॥

**9. चिन्तामणिपुत्र लक्ष्मीनारायण प्रकरण** –: ( 51–52 )

कृतिश्च ब्राह्मणस्येयमिति चिन्तामणेः सुत ॥ 51 ॥ प्रमाणं कुरु मद्वृन्दावनाग्रे त्वं प्रणश्यसे । सप्तमे ऽह्नि न सन्देहो नैवाबद्ध वदाबुध ॥ 52 ॥

**10 शेष प्रकरण श्लोक – ( 53–55$\frac{1}{2}$ )**

यद्वा करिष्यते विप्रस्त्वं पश्याद्यैव तज्जयम् । तस्मात्कृत्वापण चोभौ प्रमाण कुरुत द्विजे (कुरुतोद्विज)
॥ 53 ॥ चिन्तामणि सुतश्चाय ब्राह्मणोय ममाश्रित· । जयायापजयायापि पापबृद्धि त्यज द्विज
॥ 54 ॥ ममकोपो भवेत्तापो भविता ते सुपापिन । करोम्यह प्रमाणचेत्युक्तिमात्रेण काण भो
॥ 55 ॥ प्रमाण करणे नृणा यत्पाप तद्भवेत्तव ॥ 55$\frac{1}{2}$ ॥

**11. लक्ष्मीपति प्रकरणं (56–59$\frac{1}{2}$)**

चिन्तामणि सुतासह्य लक्ष्मीनारायणाह्वय ॥ 56 ॥ ब्राह्मणस्य कृतिश्चेयमिति ते नन्दन स्पृश ।
अलौकिक मया प्रोक्त लौकिक विप्रवाक्कृतम् ॥ 57 ॥ इति सस्पृश मत्पाद दह्यसे मम तेजसा ।
लक्ष्मीनारायण श्रीमान् ब्राह्मणो वा करिष्यति ॥ 58 ॥ गृहाण वृन्दावनाग्रे प्रमाणं प्राणघातक ।
यद्वा मद्वृन्दावनाग्रे कुरु सद्वन्दनायुतम् ॥ 59 ॥ सकृद्वा तद्वच प्रायश्चित्त कर्तुं द्विजाधम ॥ 59$\frac{1}{2}$ ॥

**12 शेष श्रो. प्रकरण (60-75$\frac{1}{2}$)**

नमस्कार प्रतीकार सरम्भेऽम्बर चारिणा ॥ 60 ॥ स्वकुमारापराधो (ध) ह्रिपिता नुस्मरते-
नु किम् । अलमल सुकृतवाक्कलौयुगे कलिमलेन कलुषे यमालये ॥ 61 ॥ हलहलेन मिलितेच
पालयाम्य (प्य) तुल दोष फलदे मलीमसाम् । मलीमसामागसानि सुधासागर शायिन ॥ 62 ॥
सुधायन सहायेन देहागारनिवासिनः । न प्रियो यद्वदेतानि चाप्रियाण्येव सर्वदा ॥ 63 ॥ तद्वदेवा
प्रियं मत्वा मा कुरुत्व सुतोत्तम । ममागस वृथा चात्र मदुक्तिर्नैव ते भवेत् ॥ 64 ॥ कलौत्तर
हठे यद्वत् शठानामेव तत्प्रियम् । मन्मठस्याभिमान तु नास्ति तत्कठिणात्मनाम् ॥ 65 ॥ मलीमसाम
साधूक्ति सुधासागर शायिनः । सदाप्रिया बुधाग्र्यस्य ममापीह बलीयस ॥ 66 ॥ इति मत्वा
सता वृत्तिमङ्गीकुरु सुमङ्गल । रङ्गनाथस्यान्तरङ्गमिद तव निरूप्यते ॥ 67 ॥ मलीमसां तु
दानानि बुधान्तर्यामिण प्रभो. । नारायणस्य सर्वत्र चाप्रियाण्येव सर्वदा ॥ 68 ॥ ब्राह्मणस्य
कृतिश्चेयं नैव नैव मयोच्यते । दैवदैव हयग्रीवो वेत्ति सर्वहृदन्तरम् ॥ 69 ॥ येत्वविश्वासिन·
सर्वे मलीमस इतिस्म ते । तस्माद्भूता भविष्यन्ते भस्मीभूता भविष्यते ॥ 70 ॥ यमेनैव ममाज्ञाया
मुच्यन्ते नरकासि (ग्नि) भि. । मुच्यन्ते नरकानेव पच्यन्ते नरकाग्निना ॥ 71 ॥ उच्यन्ते

मुनिभिर्बोध्यास्ते च्यवन्ते ह्यधोमुखा. । सूच्यन्तर्नखनेत्राश्च शोच्यन्ते यमकिङ्करै ॥ 72 ॥ सिच्यन्ते तप्तसीसाद्भिः स्वच्छ तेषा सुख न हि । इत्यविश्वासिन सर्वे निर्वाणा सर्व एव च ॥ 73 ॥ पर्वण्यपार्वणा प्रेत्य वर्षाणा कर्षणान्विता । एव कलङ्किन सर्वे ह्यल कीनाशलोकिताम् ॥ 74 ॥ यान्ति कान्तिविहीनास्ते पापिन शापिनो मम । निष्कलङ्काश्च सर्वेपि निष्कलङ्कादरा हरौ ॥ 75 ॥ निखिलान्कामितान्यान्ति निखिलागम निर्णयै ॥ 75½ ॥

**13 चिन्तामणि सुत लक्ष्मीनारायण प्रकरण :–** ( 76-83 )

कुर्या प्रमाणमित्युक्त्या लक्ष्मीनारायणात्र ते ॥ 76 ॥ मन्मनो बाणविद्ध यद्यथा स्यात्तद्गुणाधम । कुर्या प्रमाणमित्युक्त्या लक्ष्मीनारायणात्र ते ॥ 77 ॥ वर्णाना ब्राह्मणादीना साशायिक मतिर्भवेत् । एव च मम माहात्म्य विषये सशये सति ॥ 78 ॥ निःसशय कोपि मद्वृन्दावन तु न पश्यति । तद्दोषोपि तवैवस्यात् शेषशायि पदेशपे ॥ 79 ॥ माषमात्र च मद्द्रोहो महादोषाय कल्प्यते । तस्मादेतादृशी बुद्धि नस्यात्ते सर्वथा द्विज ॥ 80 ॥ क्षुद्रा मद्द्रोहमापन्ना. भज मा भुजगेश्वरम् । लक्ष्मीनारायण इति नराणा यो गुणाधमः ॥ 81 ॥ मद्द्रोहेण ब्राह्मणोपि विषण्ण हृदयोह्यभूत् । लक्ष्मीपति समुद्दिश्य लक्ष्मीपति गृहेह्यसौ ॥ 82 ॥ लक्ष्मीनारायणाह्वोऽपि ह्यलक्ष्मोक वचोब्रवीत् । महाजने भोजनेऽस्मिन् ( च्छन् ) लक्ष्मीकर महोत्सवे ॥ 83 ॥

**14 लक्ष्मीपति प्रकरण :–** ( 84–103 )

हे मञ्जु कञ्जपत्राक्ष त्व वा शिक्षद्विजाधमम् । पापिना तु गति चास्य दत्वा वै मधुसुदन ॥ 84 ॥ विश्वासिनिह्यविश्वास जनयिष्यति नन्दने । हे पुत्र क्षिपणासक्तो लक्ष्मीनारायणो मम ॥ 85 ॥ कृतेस्तच्छिक्षण चात्र त्व वा कुरु विचक्षण । मया तपोहानिभिया शापस्तस्य न दीयते ॥ 86 ॥ त्वया तच्छिक्षण कार्य क्व यास्ये तद्ब्रूयादहम् । हित्वा वृन्दावनं चात्रालङ्कृत मम नन्दन ॥ 87 ॥ कन्दाशनैः कृतानन्दै. मुकुन्देनापि तद्वद । यावद्वृन्दावन चात्र मेदिन्या मम नन्दन ॥ 88 ॥ तावन्मम सन्निधान स्याद्धरण्या धरणीसुर । तस्माद्वै दुर्जनैरुक्त निन्दा कन्दाशनोप्यहम् ॥ 89 ॥ न क्षमे नन्दनानन्दन्यासि ( नाशि ) ना मम नान्यथा । अह द्युमणिवद्भानुमन्त सद्गुण सन्ततम् ॥ 90 ॥ ब्रह्मात्म कौस्तुभमणिमन्त नौम्यगुणान्तकम् । प्रमाण करवाणीति दु खार्णवहर हरिम्

॥ 91 ॥ महामणिधर नौमि लक्ष्मीनारायण प्रभुम् । तालोल्लल्लेतिचाश्लील भाषामालां चकारह
॥ 92 ॥ कोलाहल समूहैश्च मम हृच्छल्यमालिकाम् । चकार कारणाभावेप्याकारेण वृकोदर.
॥ 93 ॥ बुद्धया दर्वीकरश्चार्यं वादे काकोदराधिप । क्षमते थापि मे स्वामी क्षमया सोर्णवोहरि.
॥ 94 ॥ क्षमा पद्भ्या चकारे ह क्षमया कि न साध्यते । क्षमया भीमसेनोपि काम्यकं वनमाविशत्
॥ 95 ॥ क्षमया सोमक सुता क्षमया यमपुत्रक । क्षमया मधवत्सूनु क्षमया यमजावुभौ ॥ 96 ॥
रामोपि राजीवनेत्रो रावणान्तकरो हरि । राज्ञोराज्ञा पुरस्कृत्य राज्ञा वनमथाविशत् ॥ 97 ॥
क्षमया क्षेमको राजा क्षमाया पालने क्षम । बभूव नाक्षम कोपि क्षमाया पालने क्षम ॥ 98 ॥
एव क्षमासमायुक्ता मुनयो मनवोपि ये । मनने च समर्थास्ते माधवस्य महात्मनः ॥ 99 ॥
तद्वत्क्षमापरश्चाह रमापत्याश्रयोऽपि सन् । कुमार त्वमपि ह्यत्र क्षमावान्भव सर्वथा ॥ 100 ॥
तादृश क्षमयाहीनः श्रीनिवासाभिधो पिसन् । मान नयाति तेनासौ मानवै कामित त्विह ॥ 101 ॥
अधुना विधिना सृष्ट मधुनादुष्ट बुद्धिना । अधना निधनाच्छिष्ट स्पष्टधा मधुसूदन ॥ 102 ॥
( विधनाधिष्ठा स्त्वष्ट धामधुसुदन )
धावन्ते तद्वदेवाय द्विजवर्यो द्विजाधम (म) । सदृशै दितिजेन्द्रस्य बाध्यते बाध्यबुद्धिमान् ॥ 103 ॥
ॐ एतत्सर्व स्वाप्नपद्येन गर्व हित्वा सर्वे विप्रवर्यास्यजेन । श्रुत्वा चोर्व्यां शर्वं गुर्वादि देवान् दृष्ट्वोर्वशी
यान्तु मा मानवेन्द्रा. ॥ 104 ॥ इद वृन्दावनाख्यान ये पठन्ति मनीषिण । मुकुन्दावन मेवास्तु तेषा
वृन्दाशनाज्ञया ॥ 105 ॥ इदमर्पित मेवास्तु हयशीर्षस्य पार्षदात् । सम सहस्रशीर्षस्य सूक्तस्य
पुरुषास्कृतम् ॥ 106 ॥ यच्छृण्वता भक्तिरुदार सद्गुणे हरौ हरे लोकगते तथा मयि । भवत्यहो
सर्वं शुभाप्ति सन्मती ददात्यजस्र सुत सत्यमेवतत् ॥ 107 ॥

ॐ इति श्री ब्राह्मण स्वाप्न वृन्दावनाख्याने निदर्शन पर्वणि द्वितीय प्राणावधौ द्वितीयाध्यायात्मक
एकोन विशो अध्याय समाप्तः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

# अथ विंशोऽध्यायः



## 1 लक्ष्मीपति प्रकरण ( 1-11 )

हरि ॐ ।। हयग्रीवयतीयौ द्वौ द्विजाग्र्यौ व्यग्र बुद्धिगौ । समग्र गुणिनौचापि ग्रीवया चोग्र भाषिणौ
।। 1 ।। लक्ष्मीपति सदानन्द सञ्ज्ञितौ प्राज्ञ कि वदे । साज्ञता चतयोः सम्यक् ज्ञाननाशाय वैभवेत्
।। 2 ।। तस्माद्विश्वास एवात्र कर्तव्य· सर्वथा नरै । अविश्वासो न कर्तव्य. सर्वथा मद्धितेषुभि.
।। 3 ।। एतानि पञ्चपद्यानि सञ्चीकुरु सुलाञ्छन । काञ्चनानि तथैवेह प्रपञ्ची कुरु वञ्चके
।। 4 ।। नागाह्न पण्डितेह त्व मा गा संहर लोभतः । त्यागान्विता सा गह्नरवाक् त्यागात्संहर्षण
कुरु ।। 5 ।। मासि मासि प्रतापं ते दास्यामीति त्वयोदितम् । सत्यं सत्यवता श्रेष्ट सत्सु त्व कुरु
सर्वथा ।। 6 ।। अन्यथानृत वाक्येन नृसिह्मस्याप्रियेणच । नृषु त्व लघुतां यासि नृगवद्धीनजन्मगः
।। 7 ।। इत्थ तव हितायैव वचनं च मयोच्यते । कुचोद्यं मा कुरु त्वं च विप्रस्य वचनं त्विति
।। 8 ।। एक वाक्य प्रतिष्ठापनाचार्याद्य त्वयोदितम् । दास्यामि तत्प्रताप ते इति सत्यं कुरु प्रिय
।। 9 ।। द्विजस्य माददस्वेति नन्दन किन्त्वबोधयत् । तव नागाह्नयागास्त्व मृषा वचन भाषणम्
।। 10 ।। प्राणस्यावधिपर्यन्तं ब्राह्मणस्य ददाम्यहम् । इति वाणीमब्रवीस्त्वं प्रवीणस्वर भाषितम्
।। 11 ।।

## 2 शेषद्रि पण्डित प्रकरणं (12-15)

त्व माभै (भी) स्तवसौभाग्य वितरामि निरन्तरम् । निशामय श्रीनिवासं शनिवारे प्रपूजये· ।। 12 ।।
तस्मा द्दस्व विप्राय सुप्रसन्नो भवामि ते । मत्प्रसादाच्च ते श्रेय प्राप्तिरेव भविष्यति ।। 13 ।। अह
जीवयितु विप्र प्रविशाम्यत्र सर्वदा । त्वमामन्त्रय सत्रार्थमन्नार्थ कुत्र यास्याति ।। 14 ।। हे पुत्र
पुत्र पश्यत्व मयि विश्वास सत्फलम् । विप्रे जीवावधिर्जाता जीवयामि पुनस्त्वहो ।। 15 ।।

## 3 हयग्रीव मुनि प्रकरण ( 16-32 )

हे नन्दनाहमानन्दपूर्णोऽस्मि तव दर्शनात् । त्वमप्यानन्द पूर्णोसि मद्वृन्दावन दर्शनात् ।। 16 ।।

आवयोरानन्द पूर्ता वावामेव निदर्शनम् । वागीश वासुदेवौ द्वावन्योन्यं दर्शनाद्यथा ॥ 17 ॥ नेतरौ तत्र दृष्टान्तावन्योन्य प्रीतिसयुतौ । तथात्रापि सुपुत्राद्य नेतरौ प्रीतिसयुतौ ॥ 18 ॥ तस्मात्तव मयि प्रीति. ममापि त्वयि सर्वदा। प्रवर्धते सुत दिने दिने चाहृ वदामिते ॥ 19 ॥ हे पुत्र ते समीप तु मन्मनोरथ सारथि. । ईश्वर ( र ) पृथुसङ्कल्प रथमारोप्य यापित. ॥ 20 ॥ स दृष्ट. कि त्वया मार्गे स्पष्ट त दृष्टवानसि। अन्यथा हृष्ट (दृष्ट) रुपस्त्व कथ शिष्टागतो मठम् ॥ 21 ॥ इत. परं कुरु सुत रथोत्सव मथो हरे । तथोत्सव सुतोषेण कुरु त्वं मन्मनोरथै. ॥ 22 ॥ रथिकस्त्व रथवर मारोहृ रविनन्दनः। यथारीन्जयते तद्वदरिषड्वर्गकान्जहि ॥ 23 ॥ प्रथम जहि काम त्व विरथ कुरु कार्मुकम् । धृत्वा वैराग्य रूपु त्व शरं मुञ्च रथीरितम् ॥ 24 ॥ एव कामजयं ग (कृ) त्वा मदमत्सर मोहनान् । क्रोधलोभौच वैराग्य कार्मुकाज्जहितेऽहितान् ॥ 25 ॥ षड्वर्ग निग्रहपर षट्पद्यानि शृणोति यः। षड्वर्गं जयते काम षट्पदाना च वृत्तिमान् ॥ 26 ॥ लेखको नास्ति कोपीहृ तवालेखोपि नास्ति च। पाकशासन लोक तु नीयते नाकिभि कृति· ॥ 27 ॥ तत्रापि लौकिक कृतौ लिखित चित्रगुप्तकैः। सन्तप्त त्रपुपूर्णास्य कृत्रिमेति वदन्ति ये ॥ 28 ॥ तप्त पाषाण तपनं तप्तमूषानिपातनम् । पुरीषा पुरण चास्ये महिषासन शासनात् ॥ 29 ॥ काषाय दण्डिनो भाषाया दोषापादके मम । ( क्रियते मत्कृतौ येषा विश्वासो निरुपाधिकः ) । तेषा न सन्ति मार्ताण्डे भीषा शास्ति मृषात्मके ॥ 30 ॥ तस्मा दलमलङ्कृत्य प्रकृत्या त्वं जना-कृति । सुकृत्यात्मक सत्कृत्य सुत मत्सत्कृति वद ॥ 31 ॥ पुरुषोत्तम पूर्वेषा कीर्ति सम्पादय प्रिय । यतिवर्येषु त्व पौरुषादेवेह समन्वित ॥ 32 ॥

**4 लक्ष्मीनारायणाख्य विप्र प्रकरण श्लोक – ( 33-39 )**

अलक्ष्मीकस्य लक्ष्मीनारायणाख्या कुत सुत । अमङ्गलस्य वारस्य यथा मङ्गलवारता ॥ 33 ॥ वियुज्यते तथात्रापि ह्ययुक्त पुण्य नाम तत् । प्रयुज्यते मया शिक्षा नियुक्ता या मनीषिभि ॥ 34 ॥ नरके नरसिह्मेन हिरण्यकशिपोर्यथा । परकीयस्य पारक्य सुखहीनस्य पापिनः ॥ 35 ॥ प्रमाणं करवाणीति वचनं पुत्रिणश्चते । न युज्यते गुणै र्हीन शरण व्रज मा मुनिम् ॥ 36 ॥ सत्य

सत्य पुन. सत्यमुद्धृत्य भुजमुच्यते । तथ्य तथ्य पुनस्तथ्यं कथ्यते तव नान्यथा ॥ 37 ॥ त्वदुक्तिः सर्वथा चात्र हृदयस्य ममान्तक । कितवायुधसन्दोह सम्मिता नात्र सशय ॥ 38 ॥ सफलावागिति प्रोक्ता ह्यल सत्यक्तवानसि । उपलत्व न सन्देहो ह्यलसत्त्वात् द्विजाधम ॥ 39 ॥

## 5) शेषाद्रि पाण्डित प्रकरण :– (40–43)

पापादे व्यापनार्थ तु धैर्याद्वा बुद्धि शौर्यत. । उर्व्या त्वमवद सर्वे वृथा गर्वेण गर्हिता ॥ 40 ॥ विद्वत्सु बुद्धिचातुर्ये त्वादृशो नास्ति नन्दन । वृन्दावन पतीनां तु मादृशोनास्त्यभीष्टद ॥ 41 ॥ अस्मिन्नर्थे च साक्षी य सुक्षीणो ब्राह्मणो मया । पक्षीकृत पुत्र कि वा वक्ष्यामि पुनरेव च ॥ 42 ॥ उज्जीवितश्च मज्जात कुब्जापतिपरायण । त्वज्जातीना समाजेन पूजितस्त्व न सशय ॥ 43 ॥

## 6 विप्र प्रकरण श्लोक (44–48)

नाध्यापयामि चाध्याय पर्यन्त तव विप्रक । त्वमद्धा स्वाध्याय हीन स्तावदद्य प्रभृत्यत ॥ 44 ॥ नन्दनेन समीचीन नदत्त वस्त्रमप्युत । कन्दाशनेन्द्र भक्तस्य श्रीपतेः सर्वथात्रतु ॥ 45 ॥ कन्दाशनेद्र भक्तस्य तव विप्र सभाग्रतः । तस्मादलमलं कृत्या त्वा वृथा श्रमयाम्यहम् ॥ 46 ॥ हित्वा कलिमल विप्र वद वृन्दावने कृतिम् । मन्मध्यस्थ हयग्रीवो ग्रास ते प्रतिदास्यति ॥ 47 ॥ वेदाग्र्यं भारतं चापि वद वृन्दावनाग्रत. । प्रेरयित्वाच मत्पुत्र तव प्रिय न सशय. ॥ 48 ॥

## 7 श्रीपति प्रकरण (49–50½)

कारयित्वा भारतस्य त्वया सेवामपि प्रिय । श्रीपते श्रेष्ठवित्त तु न दत्त पुत्र किं वदे ॥ 49 ॥ जनाना कर्ण जाड्य स. हरते पाठत. कृते । यावत्तव शरीरेतु वसाम्यहमिह प्रिय ॥ 50 ॥ तावज्जीवसि हे विप्र हा मृतोऽसि गते मयि ॥ 50½ ॥

## 8. दाम्बल ग्रामस्थ नारायण प्रकरण (51–52½)

हे दाम्बल पित्तमौले नारायण गुणाधम ॥ 51 ॥ कलह कर्तुमुद्युक्तस्त्वं धिग्बाल तवाधुना । कनका कृष्ण भट्टीय कनकात्तमना अपि ॥ 52 ॥ मनाक् मज्ज्ञान सम्पत्त्या मनः काम प्रयाति च ॥ 52½ ॥

### 9) विट्ठल प्रकरण :– ( 53–59½ )

हे नन्दन शृणु स्पष्ट शिष्टस्य वचन मृषा ॥ 53 ॥ नागाह्व पण्डित स्यासीत्तस्याभीष्टं कथ भवेत् । नानृतात्पातक ना (चा) स्ति कोनृत वदते बुधः ॥ 54 ॥ सोऽनृतात्मा नश्यतीति श्रीनृसिह्मो-ऽभिजानते । तम्मान्नवक्तव्यमेतदनृतं त्वमृतात्मभिः ॥ 55 ॥ किमृतात्मा वदत्येव श्रीनृसिह्म मतं गत । अह न निन्दयामि त्वा स्वभाव. कथ्यते तव ॥ 56 ॥ मया त्वया न कर्तव्य. कलहोत्र कलि प्रियः । स्वरुपस्य अनपायित्वा द्वृथा कि कलहेन ते ॥ 57 ॥ कलहे क्रियमाणेऽपि स्वरुप गच्छते नु किम् । अन्यथा मत्कृतिरिय न विप्रकृतिरित्यथ ॥ 58 ॥ प्रत्ययस्ते भवेदत्र भक्तिस्तस्माज्जनिष्यते । दिवा वा यदि वा रात्रौ निद्राया भद्रमस्तु ते ॥ 59 ॥ वक्ष्ये स्वप्ने थवास्वप्नेप्यहं त्विह दिवाप्य हो ॥ 59½ ॥

### 10 लक्ष्मीपति प्रकरण ( 60–68 )

गेह नास्तीति ते चिन्ता मास्तु देहे वसाम्यहो ॥ 60 ॥ सोह महानुभावस्ते गेहदो मम गे (दे) हद । बलात्कारेण मत्पुत्र वद लक्ष्मीपते कृतिम् ॥ 61 ॥ कुलान्युद्धर पूर्वेषा दश पूर्वान् दशापरान् । हे सुताध्याय करण कुतो न कृतवानसि ॥ 62 ॥ बत स्वाध्याय तिथिषु त्व कुरुष्व प्रियोऽसिचेत् । हिम कोकिल एवाहं वक्तव्यांशेपिवा कलौ ॥ 63 ॥ युगे जलचरा यद्वच्चांचल्यनिरता नराः । स उच्चकाशे धवलोदरोदरो दाध्मायमानः करकञ्ज सम्पुटे ॥ 64 ॥ उरुक्रमस्याधर शोण शोणिमा यथाब्ज षण्डे कलहसउत्स्वनः ॥ 65 ॥ इति भागवतं पद्यं द्रष्टव्यं नन्दन त्वया । वन्दन मम कर्तव्य वृन्दावन कृतेरपि ॥ 66 ॥ तादृश शङ्खमादाय नि शङ्कोह महामते । दध्मामि तान् प्रपुङ्खानि विस्मितश्चाङ्कजो मनि. ॥ 67 ॥ श्वास नि श्वास हीन मे भासमानास्यपङ्कजम् । हयास्य दासस्य सोय निशाम्याशु सुविस्मित. ॥ 68 ॥

### 11. विप्र प्रकरणं श्लोक ( 69 )

अहो मुग्वचन हित्वा गह्वरेति त्वयोच्यते । उपह्वरे वदस्व त्व महिष्ठ न सभासु च ॥ 69 ॥

**12. श्रीपति प्रकरणं श्लोक नसमासुचे त्यारभ्य ( 70–71 )**

त्यागान्विता वदस्व त्वं त्वद्वामद्य न शोभते। नागाह्व पण्डित चात्र मद्वागाशु त्वयोच्यताम् ॥ 70 ॥ निःशङ्क एव श्रीकान्त निरातङ्क वचो मम। एकान्तेन मृषैकान्त वद लोकान्ततोपि तम् ॥ $\overline{71}$ ॥

**13. हयग्रीव कर्मन्दि प्रकरणं :– ( 71½ )**

उपराग हयग्रीव कर्मन्दिन् प्राप्तमग्रतः ॥ 71½ ॥

**14 सीतापति श्रो प्रकरण (72–90)**

पश्य सुग्रीवमित्राह्व दानं कुरु ऋते रत ॥ 72 ॥ नागाह्वपण्डितो यद्वत् मामृषागा त्वमब्रवी.। कोमृषा वचन ब्रूते कोविदस्त विनेहच ॥ 73 ॥ पूर्वं तु मातुल व्याजादहं सकल जीवराट्। भूतले दत्तवानस्मि कालज्ञ. सार्धं निष्ककम् ॥ 74 ॥ अह त्रिलोक पूजित कृतान्त लोक नायकः। अहं कुलोद्धृतिं ततोऽकरं च सौरि लोकत. ॥ 75 ॥ वृन्दावनाचार्यकोर्वीं हरते योऽति रौद्रकः। स मद्वृन्दावनद्रोही ह्यभद्र च भवेद्ध्रुवम् ॥ 76 ॥ हरे स्मरे ते चरणे हर मे ससृतिं ऋणे। वरं तव करेणार्यं स्पृश मां करुणा कुरु ॥ 77 ॥ इत्यहं प्रार्थयाम्युग्र हयग्रीव महाग्रहम्। निग्राह्य चेन्द्रिय-ग्रामं शीघ्र नासाग्रलोचनः ॥ 78 ॥ मम सद्भक्ति सम्भूतिं ये वदन्ति बुधोदिताम्। तेषा सत्सम्पद स्युस्ता मूर्तिमत्योत्रयाः सुत ॥ 79 ॥ दीर्घग्रीवैं र्भुक्त रम्भाफलैर्जिह्वा विदार्यते। तद्वद्भुक्तै मंद्धनैश्च तज्जिह्वापि विदार्यते ॥ 80 ॥ यज्जिह्वा मत्कृति नैव वक्ष्यतीह परत्रच। भार्यामिद्भक्त मुख्यस्य यान्तु दुष्कृति मात्मन. ॥ 81 ॥ कार्यात्प्राक् शिथिला कृत्वा नार्याः कीर्ति-मुपाददे। शिवत्रिणा मूत्रपानेन तत्पात्रेषु च मज्जते ॥ 82 ॥ सहस्रधा भवेच्छिन्ना सहस्रांशु सुते न च। सहस्राक्ष सभाया तु सहस्रारेण तप्यते ॥ 83 ॥ सहस्रवारं विष्ठायां षष्ठिवर्ष सहस्रकम्। सहस्र चण्डालजाना सहस्राण्डानि भक्षताम् ॥ 84 ॥ सहभाण्डे सुरापीनां पच्यते नात्र संशयः। जायन्ते चाष्टधा (स्वष्टधा) चैव कष्टयोनिषु नान्यथा ॥ 85 ॥ तस्माच्च मत्कृतेः पाठं शिष्टा कुर्वन्तु नान्यथा। इष्ट च तेषां भवति कष्ट नेह परत्रच ॥ 86 ॥ ये मृषा वादिनं मां तु जानन्ति मनुजाधमाः। कीनाश लोकिता यान्ति नानाशोकसमन्विताम् ॥ 87 ॥ तस्मान्मयोक्त यत्सर्वं

तत्सत्य नात्र सशय । मत्सत्य वचनं श्रुत्वा सन्तु तद्वद नन्दन ॥ 88 ॥ स्वाप्नश्लोकेऽपि यत्प्रोक्तं प्राप्नुवन् तच्च नान्यथा । आप्तवानपि जानाति तापने क्रुरता दिवि ॥ 89 ॥ दिवा स्वप्नैरितान् श्लोकान् भवाब्धेस्तारकान्सुत (तः) । सुवाग्वैरवर्यं राशिर्मे तवार्थैः पुरयिष्यति ॥ 90 ॥

**15 वासुदेव मुनि प्रकरण श्लोक :– ( 91–95 )**

वेङ्कटेशो मठेशस्य मम वृन्दावन प्रति । त्रिकूटेशेन चायात. काठकेशै. सहर्षिभि ॥ 91 ॥
तस्माच्च श्रीपतेः श्रीनिवासस्य मनसा कुरु । वासुदेवमुनै श्रीमन् शनिवारे सुपूजनम् ॥ 92 ॥
मन्दवारेऽपि वाऽमन्द कुरु वृत्तिञ्च माधवी । वृन्दावनपतिं कन्दाशन वन्द्य सुकीर्तयन् ॥ 93 ॥
कन्दाशनस्य मे वृन्दावन सम्प्रति नन्दन । मन्दाकिन्या समायातो मुकुन्दो बिन्दुनामक ॥ 94 ॥
यतोऽस्मद्वृन्दावनस्य दर्शने बिन्दुमाधवम् । दृष्ट्वा मुकुन्दं यत्पुण्य श्रीनिवास तदाप्नुयात् ॥ 95 ॥
ॐ एतत्सर्वं स्वाप्नपद्येन गर्वं हित्वा सर्वे विप्रवर्यास्यजेन । श्रुत्वा चोर्व्यां शर्वगुर्वादि देवान्दृष्ट्वोर्वशी यान्तु मा मानवेन्द्राः ॥ 96 ॥ इद वृन्दावनाख्यानं ये पठन्ति मनीषिण' । मुकुन्दावनमेवास्तु तेषां कन्दाशनाज्ञया ॥ 97 ॥ इदमर्पित मेवास्तु हयशीर्षस्य पार्षदात् । सम सहस्रशीर्षस्य सूक्तस्य पुरुषात्कृतम् ॥ 98 ॥ यच्छृण्वतां भक्तिरूदार सद्गुणे हरौ हरेर्लोकगते तथा मयि । भवत्यहो सर्वं शुभाप्ति सन्मती ददात्यजस्र सुत सत्यमेव तत् ॥ 99 ॥

ॐ इति श्रीमद्वादिराज पूज्य चरणोदित ब्राह्मणस्वाप्न वृन्दावनाख्याने निदर्शन पर्वणि चरम प्राणावधौ तृतीयाध्यायात्मक विशो अध्याय. सम्पूर्णः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

# अथ एकविंशोऽध्यायः

**1. विप्र प्रकरणं श्लोक- ( 1–5½ )**

हरि. ॐ ।। तवकायगत वायुमायुषो वृद्धिमिच्छत । स्थापयामि यतोपाय श्रेयो मत्कृतमेव ते ।। 1 ।।
तवपत्न्याश्च हे विप्र यत्नेनैतत्कृत त्वया । स्वप्नं दृष्ट्वाच त्वामूचे पुण्यमाप्नोषि तेनच ।। 2 ।।
अतस्त्वं धर्मपत्नीच नैव सन्तापय प्रिय । अनुवर्त्नी सदा विप्र कुदारत्व न हीदृशम् ।। 3 ।।
यादृश परलोकस्य श्रीधरस्य विदूरताम् । करोति पुरुषस्येह तादृश नास्ति त्वत्स्त्रियाम् ।। 4 ।।
किवा ऽशक्तत्वतो विप्र त्वत्सेवां न करोति च । सूतके वायुना ग्रस्ता हरत्यहरहः स ताम् ।। 5 ।।
तस्या प्राणभय नास्ति स्वमाणवक पुण्यत ।। $5\frac{1}{2}$ ।।

**2 शेष प्रकरण श्लोक . –( 6–6½ )**

ब्राह्मण त्व वृथा काण निष्ठुरं न भणानिशम् ।। 6 ।। तस्माद्रूय त्यजस्वेह कलहन्तु कलिप्रियम् ।

**3 बहुभक्त श्रो प्रकरणं श्लोक – ( 7–11½ )**

हे विद्वास इह ध्वान्तवन्त पश्यध्रामञ्जसा ।। 7 ।। कदध्वानं स्ववध्वाच मणिमद्वदनोदितम् ।
वदतेऽय द्विजो मध्वाचार्याध्वान विहायच ।। 8 ।। अविद्वान् साध्वस याति तद्वत्कमलनाभक ।
मदन्तर्यामिण ब्रह्माण सवायु विहायच ।। 9 ।। ब्राह्मणोऽय मणिमतो मतमाश्रित्य वर्तते ।
हयग्रीवाज्ञया वात विरिञ्चौ स्वेच वंभवम् ।। 10 ।। विना वाणीपतित्व मे दत्तवन्तौ च कि वदे ।
यत्र प्रतीतार्थबाधस्तत्रान्तर्यामि सङ्ग्रह. ।। 11 ।। कर्तव्य इति पूर्वोक्त मनुमन्दध्व मञ्जसा
।। $11\frac{1}{2}$ ।।

**4 शेष प्रकरणं श्लोक – ( 12-18½ )**

तस्मान्मयोक्तं सकल लौकिकं वाप्यलौकिकम् ।। 12 ।। सत्य सत्यवता नाथ सुत तत्वमते कृतिम् ।
अय कमलनाभश्च मयः सकल ( लि ) रूपकः ।। 13 ।। स्मयकश्मलमाविष्टो विस्मय न कुरू
प्रिय । कलिः कमलनाभाख्यः पुनर्भूवलयेऽभवत् ।। 14 ।। मिलित. स्वस्त्रियाऽलक्ष्म्या या निर्माल्य
न मेऽगृहीत् । कलिर्मयश्च मणिमान् मिळित्वा त्रय एवते ।। 15 ।। कलहं कर्तुमुद्युक्ता. कुलाय

सदनाभिधा । तन्निन्दावचन श्रुत्वा सुनन्दन पुरो मम ॥ 16 ॥ नन्वन्धे पातयाम्युग्रे धुन्वंस्त यमकिङ्करै । तस्माच्छिखोपवीतार्हो नैव सोप्यतिगर्हित. ॥ 17 ॥ बहिष्कुरुत त विप्रमसहिष्णु ममोच्छ्रयम् । हरौ रुष्टे गुरुस्त्राता गुरौरुष्टे न कश्चन ॥ 18 ॥ यथा स्त्रिय पतौरुष्टे न भ्राता पितरावपि ॥ 18½ ॥

**5. हयग्रीव मुनि प्रकरण श्लोक :–** ( 19–32 )

हयग्रीव निरूपं त्व शिरसा वह शीघ्रतः ॥ 19 ॥ यद्वा विधिनिषेधाभ्यामुत्थितं तद्धित तव । वादिराजाख्य भट्टोय सुनो मे पट्टवर्धन ॥ 20 ॥ स्वप्ने पटुतरो विप्रः श्रीपति कृतिपाठकः । व्यासराजस्तदनुजो जामाता तस्य गोपज ॥ 21 ॥ तदग्रजः प्रजाकार्यरञ्जनाज्जनयन्धनम् । बासुदेव मुनि. शान्तः श्रान्तश्च मम पूजया ॥ 22 ॥ कान्तं मां तातमायाति तत्र वैवस्वती भवेत्- ( तत्रैव वसति र्भवेत् ) । उपेन्द्र. सूरणश्चापि कृष्ण कानक एवच ॥ 23 ॥ हिरण्यभट्टस्तत्रोक्त कर्मणि प्रथित सुत । वाणिवाळोपपद वेङ्कटाद्रिस्तथैवच ॥ 24 ॥ एतेचान्येच बहवो बहुमान पुरस्सराः । कुहकाद्रहिता. सर्वे सर्वेश्वर मतानुगाः ॥ 25 ॥ विश्वासिनो ह्यविश्वासं न कुर्वन्तीह सर्वथा । सुश्वास प्रेरको ह्येषा त्वसुदेवो ऽभिजायते ॥ 26 ॥ कलि. कमलनाभश्च दाम्बलः पित्त मौलिक । लक्ष्मीनारायणो डोलायितचित्तस्तु तम्मण ॥ 27 ॥ एतेच प्रायशोह्यत्र पुत्राविश्वासिन. सदा । मित्रज (जा) भृत्यबाध्याश्चामुत्र सत्य मयोदितम् ॥ 28 ॥ हरिश्च दाम्बल. पुत्र व्यालोलित मनाप्यहो । कुलाल चक्रवच्चात्र भ्रमते कल्यबुद्धिमान् ॥ 29 ॥ अप्पणः कृष्ण भट्टोय मिदानी पापमत्यजत् । कोपंच मम हे पुत्र शाप त्याजितवानहो ॥ 30 ॥ श्रीनिवासाचार्य नामा मानवाना भयानक । मम मानस सम्प्रीति तनोतीह न सशय ॥ 31 ॥ विठ्ठलाद्यास्मदीया स्मन्मठ सन्यासिनश्चये । वटबीजवदेवास्मदुटजानन्दवर्धका ॥ 32 ॥

**6 विप्र प्रकरण श्लोक** (33–37)

हे विप्र तव जामाता रामचन्द्रोऽपि बुद्धिमान् । विश्वास कुरुते चात्र सोपि विश्वासिषूत्तमः ॥ 33 ॥ एव च त्रिविधा विप्राः प्रोक्ता. पुत्र मया तव । श्रुत्वा कृतार्थतां यासि किं भूयः श्रोतुमिच्छसि

॥ 34 ॥ नित्य निर्जल निर्धातै । दुर्जना भर्जितास्त्वहो । खर्जूरवच्चार्जुनस्य बाण निर्घातमर्दिता
॥ 35 ॥ यथा तथैव सुत्राम्णा वृतवृत्रासुरार्थिना । अन्वेषु मार्ताण्डिकृत शिला भारै कुलान्विता
॥ 36 ॥ बाध्यन्ते श्राद्धदेवेन श्रद्धारहित बुद्धय । वृद्ध त्वमद्धा क्रुद्धेषु ह्यपि तेषु वदस्व तान्
॥ 37 ॥

**7 बहुभक्त श्रो प्रकरणं** (38-40)

तस्माद्विश्वासवन्तश्च भविष्यथ कृतौ मम । विश्वस्ता. प्रेत्य मर्त्या ये ह्यमर्त्यत्वं व्रजन्तिते ॥ 38 ॥
अह मध्यदिनगत सूर्यवत्सुप्रभान्वित । मद्वृन्दावन मध्यस्थो वासुदेवमुने प्रियान् ॥ 39 ॥ पूजकस्य:
तपोयोगात् बिम्बे शम्भव ( बिम्बेशस्य च ) दर्शनात् । महोपचारोप हारै ( महोपहारोपचारै. )
हरि. सुस्थिर एव च ॥ 40 ॥

**8. वेदनिधि प्रकरणं श्लोक .–** ( 41-50 )

इति श्रीत्यादिकं चोक्त्वा समापय न मे कृतिम् । मत्सुतस्य च भागोय समाप्तिः श्रीरमात्मिका
॥ 41 ॥ अध्यायकरणार्थं च शरणागत वत्सल । द्विरध्याय प्रणीतो मे वाणी शृणु सुनन्दन
॥ 42 ॥ हे विप्र मम पुत्रस्य पिब पादोदक सदा । क्षिप्र नाशय ते तेन शीतोष्ण ज्वरपीडनम्
॥ 43 ॥ ब्राह्मणे स्वप्नमद्राक्षीत् कर्णे यक्षीच कश्चन ( कर्णेच पक्षिनन्दन ) । लक्ष्मीपति गृहे
पक्षीकृत विप्रो ऽतिपुण्यभाक् ॥ 44 ॥ अन्यथा गुरुराजस्य कथं स्वप्नाधिकारिता । तस्माद्गुरु.
शरीतेऽस्य वर्तते ऽमर्त्य विग्रह ॥ 45 ॥ इत्यवादीन्मदान्धानामन्धत्व त्याजयन्बुधः । तस्मादप्यधमा
बुद्धिसन्धानरहिता द्विजा ॥ 46 ॥ हे शव त्वमविश्वास कुतो ऽ स्मासु गतोस्यहो । केशवस्तव
विश्वासरहितस्य सुशासक ॥ 47 ॥ शवेति वक्ष्यामि कुत प्रवक्ष्ये तत्र कारणम् । शवेति
सुखमुद्दिश्याप्याश्वसीर्मम शासनम् ॥ 48 ॥ अथवा कुणपार्थो वा प्रणिपातप्रिय च माम् । शरण
व्रज ते क्षेमं कृणुयां मम विप्रवत् ॥ 49 ॥ मयानन्दनमुद्दिश्य नाना विधतयोदितम् । त्वया प्रसन्नी
क्रियते नैव सोपि अन्नयाचनम् ॥ 50 ॥

**9. विप्र प्रकरणं अन्नयाचनमित्यारभ्यश्लोक :– ( 50-51 )**

कुरु वृन्दावने सम्प्रत्येव ते चान्नदे शुभे । मन्नन्दनमुखेनैव तदन्न ते प्रदास्यति ॥ 51 ॥

**10 वेदनिधि प्रकरण .– ( 52-55 )**

मम भोजन सन्तोष सुजनाम्बुज भास्करम् । कुजनाम्बुज सङ्कोच द्विजराज ममात्मजम् ॥ 52 ॥
मदजाड्य रुजाहीन द्विजाराध्य भजाद्यतम् । वदन्त द्विज ते कल्प भुज मज्जनता प्रति ॥ 53 ॥
मम भोजन सन्तोष ये वदन्ति द्विजोदितम् । तेषामन्नानि सम्पूर्णानीति सत्या फलश्रुतिः ॥ 54 ॥
इति मन्त्रस्त्वया तत्र जप्तव्य सततत्विह । कुत्रयास्यति ते पुत्र कलत्रैः सहमा सह ॥ 55 ॥

**11 विप्र श्रो. प्रकरण – ( 56-61 )**

इहेतिचोच्यते मया प्रियेति चोच्यते त्वया । मया त्वयाप्यहो विधिर्महोदधौ विधिष्यते ॥ 56 ॥
सयथा वदति ह्यावा गावाक्तेचान्यथाभवेत् । निर्णय च प्रपश्यावस्त्वर्णवे मणिराजि (ज)ते ॥ 57 ॥
इति हास्यास्पदा ते च शेमुषीशासकोम्म्यहम् । मासि मासि शुभावासि भासमान' शशी यथा ॥ 58 ॥
परसौख्य त्वन्मुखेन नरसौख्यं यथा च मे । सुरसौख्य च मे सूर्य करवचन प्रकाशय ॥ 59 ॥ मम
सद्भक्ति सुम्भूति ये वदन्ति बुधोदिताम् । तेषा सत्सम्पद स्युस्ता मूर्तिमत्योऽत्रया सुत ॥ 60 ॥
इत्येक श्लोकमुख्य मे त्यक्तवानसि विप्रक । आकरस्थ लेखन च कारय प्राड्मरितम् ॥ 61 ॥

**12. वेदनिधि प्रकरणं श्लोक .– ( 62-66 )**

हे ब्राह्मणान्नमन्त्र त्वं जपन् सम्पश्य मा मुनिम् । शतानन्द मुनेस्तातो ब्राह्मणान्न यथातनोत् ॥ 62 ॥
तथा तनोषि त्वमपि वृन्दावन पति जप । मन्त्रेणानेन विप्रेन्द्र शीघ्र ते ऽन्नं ददाम्यहम् ॥ 63 ॥
पूर्वं त्वमन्नदान च नाकर परमे द्विजे । नादत्तमुपतिष्ठेच्च ब्रह्माद्यास्त्रिदशाऽपि ॥ 64 ॥
अतस्त्व कार्पण्य भाव त्यज ब्राह्मणतर्पणम् । कुरु कृष्णार्पण तच्च दर्पणे स्वमुख यथा ॥ 65 ॥
पश्यसि त्व जन्मजन्मन्येव सत्फल सञ्चयम् । मन्ममन्म वयं सर्वेप्येवमेव न संशय ॥ 66 ॥

**13 बहुभक्त श्रो. प्रकरणं श्लोक – ( 67-72½ )**

मुनि मन्नन्दन पुण्यात्मानं पश्यन्तु सज्जना । स्नाते च प्रणवध्याने व्याख्याने देवतार्चने ॥ 67 ॥

पुनर्माध्याह्निके स्नाने भोजने ब्राह्मणै सह । नित्यं स वर्तते विद्वान् वेदशास्त्र विनोदतः ॥ 68 ॥ प्रीणयन्परमानन्द सददन्ममनाकिनः । नो वृथा क्षणमप्यस्य गत तोकस्य सात्विका ॥ 69 ॥ पश्यन्तु तपसोऽस्माक साफल्य च कलीयुगे । तस्मादय च तोकोपि लोकोपकर कर्मवान् ॥ 70 ॥ शोकोप्यमुत्र नास्त्येव कोपोपि समवर्तिन. । गुणान्द्विगुणितानस्मिन्पश्यन्तु गुणिनः सदा ॥ 71 ॥ गुणिनश्च प्रमोदन्ते गुणिष्विह (ष्वेव) ननिर्गुणा । तस्मान्मम समो मन्नन्दन एव दिने दिने ॥ 72 ॥ कर्मन्दिना सदानन्द तनोतु तनुभृत्स्वयम् ॥ $72\frac{1}{2}$ ॥

## 14 वादिराज भट्ट प्रकरण – ( $73–76\frac{1}{2}$ )

हे वादिराज भट्टार्य नामधार उदार ते ॥ 73 ॥ सार्थक करुषे जन्म पार्थवन्नात्र सशय । वृन्दा-वनाचार्य नाम्न पुत्रमित्रकलत्रकै ॥ 74 ॥ सह तस्य गृह दत्वा बृहत्कीर्तिमुपाददी । प्रतापं तस्य दत्वा चामित्रताप करोष्यहो ॥ 75 ॥ पत्रतापाख्य रुद्रोऽपि स्वप्रताप जहाविह । लक्ष्मीपति प्रतापार्थ दत्वा प्रारब्धमप्य हो ॥ 76 ॥ स्वेन सार्धंच तद्भुक्त्वा परार्ध लोकमेष्यति ॥ $76\frac{1}{2}$ ॥

## 15 विप्र प्रकरणंश्लोक – ( $77–85\frac{1}{2}$ )

निष्कद्वय स दत्वातु शुष्क तत्पापसञ्चयम् ॥ 77 ॥ किष्किन्धेश्वरश्ववच्चक्रे पुल्कसा जन्मयापकम् । सोपि दासो मम व्यासः स्नेहपाशान्वितस्त्वयि ॥ 78 ॥ हस्ते च श्रीपते निष्क द्वय प्रापयदाशुते । तेन ते तात एवासौ माता ते तत्सती द्विज ॥ 79 ॥ तस्यानुज पितृव्यस्ते गुरुर्मत्सुत एवच । इत्थं सदानुसन्धान बन्धनान्वित एव सन् ॥ 80 ॥ धन्वन्तरि सदा ध्यायन् किं धनै र्बन्धनप्रदै । वर्तस्व समुपास्वेह कार्तस्वर विभूषितम् ॥ 81 ॥ पार्थःस्वरमण कृष्णं यथाप्रार्थस्व ( प्रार्थ्यस्व) मामपि । नन्दन यति सन्दोहेनान्वित तन्मते स्थितम् ॥ 82 ॥
सन्मति जन्मत कान्त शान्त तं समुपास्वह । इहामुत्रार्थद शास्त्रार्थज्ञ तत्वार्थकोविदम् ॥ 83 ॥ सुत्राम गुरुवत्प्राज्ञ प्रार्थय श्रीपतेः प्रियम् । औदार्य माधुर्य वाक्ययुक्त धैर्यान्वित परै ॥ 84 ॥ विवादे क्रियमाणेऽपि गाम्भीर्येणार्यभाविनम् । चातुर्यत पराक्रान्त मातुर्यस्यास्तपोदयम् ॥ 85 ॥ प्रातर्युग तत्पदयो प्रार्थयंस्त्वं सदाद्विज ॥ $85\frac{1}{2}$ ॥

**16. वेदवेद्य श्रो प्रकरणं** – (86-91½)
अपां फेनेन नमुचेः शिरोदुश्च्यवनोऽहरत् ॥ 86 ॥ यथा तप' प्रभावेन हन्म्यहं परवादिन । तस्माद्दुर्वादिभिर्भीति नास्ति नास्ति सभासु ते ॥ 87 ॥ तज्जिह्वा सान्तरैर्बद्धा भविष्यति न संशयः । अतस्त्व नन्दन ममानन्ददानन्द मन्मुने. ॥ 88 ॥ मत मनसि सन्धाय तामसान्जहि वादिन ; धनूरत्न मनस्ते वै ह्यानन्द मुनि सन्मतम् ॥ 89 ॥ नानायुधनिदानं ते रथिनः पृथु-वादिन. । पक्षपातरथ मे त्व क्षिप्रमारोह् काङ्क्षितम् ॥ 90 ॥ लक्ष्यं लक्षणसपन्न दुष्टपक्षाभिधं बुध । विद्धं कुरु प्रबुद्धेश वृद्धवाक्यं न धिक्कुरु ॥ 91 ॥ बद्धं कुरु मनस्ते मत्पादपद्मे धृति कुरु ॥ 91½ ॥

**17 बहुभक्त श्रो प्रकरणं श्लोक** .– ( 92-96½ )
तिमिर समरे रम्य निमिरेव कुमारकम् ॥ 92 । अमरं त्वमराराध्यं सोमराट् परमोऽरमत् । अमुचन्नमुचि. कान्ति ( ञ्ची ) त्वञ्चन् किञ्चन सिञ्चनै. ॥ 93 ॥ लाञ्छनाञ्छन सञ्छन्न नाराचान्न शचीपतिम् । एतद्द्विपद्यभाव मे नन्दनान्मन्द बुद्धयः ॥ 94 ॥ निबोधन्तु न धुन्वन्तु निधान भवता मुनि । ज्ञानसागरमग्नोसौ ससाराग्नि प्रदीपितान् ॥ 95 ॥ तत्पूरै भंग्न सन्ता पादङ्घ्रिरग्निमिवाकरोत् । तस्मात् ज्ञाननिधिं प्राप्य सुखिनः सन्तु सज्जनाः ॥ 96 ॥ विज्ञान कोशादज्ञान निशाकुर्वन्तु सर्वथा ॥ 96½ ॥

**18. वेदवेद्य प्रकरण** – ( 97–105 )
श्लोकद्वयस्य शक्यार्थं तोक त्व चोक्तवानसि ॥ 97 ॥ लोके यथा शक्रगुरु त्वं कविर्वाक्पतिस्त्वहम् । किं तें दास्यामि मद्दास्यं पूर्वमेव त्व माददी ॥ 98 ॥ तस्मान्मत्साम्य मेवेह चादत्स्व सुत सात्विक । मत्साम्येच त्वया प्राप्ते त्वत्समो नास्ति सत्सु च ॥ 99 ॥ सत्सता सम्मतं सत्य कुत्सितानां-मसम्मतम् । जगत्सत्य यथा तत्त्ववादिना न मृषात्मनाम् ॥ 100 ॥ असत्यमप्रतिष्ठं ते जगदा-हुरनीश्वरम् । अपरस्पर सम्भूत किमन्यत्काम हैतुकम् ॥ 101 ॥ एता दृष्टिमवष्टभ्य नष्टात्मानो ऽल्प बुद्धय । प्रभवन्त्युग्र कर्माण क्षयाय जगतो ऽहिता ॥ 102 ॥ इति गीतोदितै श्लोकै

तोक वाक्कायकर्मभि । लोकनाशक रूपाणां वराकत्वं निरूप्यते ॥ 103 ॥ तद्वृत्तवोच्छ्रयं दृष्ट्वा ह्यसूयन्ते ऽनसूयया । सहसर्वे महद्यान्ति ह्यभद्र रौद्रमेव तें ॥ 104 ॥ तस्मात्त्व मत्समो नित्यं कुत्सिताना भयानक । वत्स त्व सत्सु सम्पूज्यः शश्वदत्र परत्र च ॥ 105॥ ॐ एतत्सर्वं स्वाप्नपद्येन गर्वं हित्वा सर्वे विप्रवर्यास्त्यजेन । श्रुत्वा चोर्व्यां शर्वगुर्वादि देवान्दृष्ट्वोर्वशी यान्तु मा मानवेन्द्राः ॥ 106 ॥ इदं वृन्दावनाख्यानं ये पठन्ति मनीषिणः । मुकुन्दावन मेवास्तु तेषांकन्दाशनाज्ञया ॥ 107 ॥ इदमर्पित मेवास्तु हयशीर्षस्य पार्षदात् । सम सहस्रशीर्षस्य सूक्तस्य पुरुषात्कृतम् ॥ 108 ॥ यच्छृण्वता भक्तिरूदार सद्गुणे हरौ हरे लोंकगते तथा मयि । भवत्यहो सर्व शुभाप्ति सन्मती ददात्यजस्रं सुत सत्यमेव तत् ॥ 109 ॥

ॐ इति श्रीमद्वादिराज पूज्य चरणोदित ब्राह्मणस्वाप्न वृन्दावनाख्याने निदर्शन पर्वणि चरम प्राणावधौ तृतीयाध्यायात्मक एकविंशतितम अध्याय सम्पूर्ण. ॥

॥ श्रीकृष्णार्पणमस्तु ॥

# अथ द्वाविंशोऽध्यायः



**1· श्रीपति प्रकरण श्लोक .–** ( 1 )

हरिः ॐ ॥ श्रीपते गृहकृत्यं ते बह्वस्ति हित्वाच तत्। नन्दनाग्रे वदस्व त्वं चरमां वा कृति प्रिय ॥ 1 ॥

**2. शेषाद्रि पण्डित प्रकरण श्लोक :–** ( 2 )

तद्वेङ्कट गिरेर्नामधार पूर्वं त्वयार्जितम् । कर्म वृन्दावनाश्वत्थसेवापरशुना हन ॥ 2 ॥

**3. वासुदेव मुनि प्रकरणं श्लोक :–** ( 3–5 )

वासुदेवमुनेर्भानो यथा तामसनाशनम् । तथैनसो विनाशोभून्माधवान्नस्य भोजनात् ॥ 3 ॥
पूर्वं कृष्णाकर स्पृष्टमन्न काम्यवने मुने । भुक्त्वाच मुनय. सन्नपापास्त्व माधवान्नत. ॥ 4 ॥
भुवि पूजाधिकारोभूत्तव जातैनसः क्षये । भवजार्तिश्च ते नस्याद्विवा वाङ्न मे मृषा ॥ 5 ॥

**4. वेदवेद्य प्रकरणं श्लोक .–** ( 6–11 )

अमुचन्नमुचिस्तिमिर समरेत्यादिपद्यतः । पूर्वपद्यानुकूल्यादर्थं त्वं चोक्तवानसि ॥ 6 ॥ मत्तात्पर्यं त्वमेवेह जानासि श्रीनाथनामयुक् । को नाम तव सादृश्य समर्थः प्राप्तुमञ्जसा ॥ 7 ॥ उपक्रमादि लिङ्गैश्च मत्तात्पर्य विनिर्णयम् । करोषि पूर्ण सादृश्य गतोसि मम सर्वथा ॥ 8 ॥ उपक्रमोपसहारौ अभ्यासो ऽपूर्वता फलम् । अर्थवादोपपत्तीच लिङ्गं तात्पर्य निर्णये ॥ 9 ॥ इति षड्विध तात्पर्य लिङ्गान्निर्णय एव च । कर्णश्राव्यार्थसार त्वं व्याकरोषि कुमारक ॥ 10 ॥ तस्मान्मे पट्टभद्रेह सन्तु भद्राणि सर्वदा । अभद्राणि विनश्यन्तु क्षुद्रास्तेवैरिणस्तथा ॥ 11 ॥

**5 श्रीपति प्रकरणं श्लोक –** (12–16 )

हे नन्दन द्विजोय ते नन्दनस्पन्दनं विना । वृन्दावनेच मन्दानां नन्दयिष्यति नन्दनै. ॥ 12 ॥ तस्य किञ्चित् सहाय त्व कुरु चान्नार्थमर्थत । नान्नमन्त्र (नान्नवत्व) कुरु व्यर्थ सार्थकं कुरु शीघ्रतः
॥ 13 ॥ त्व ददस्वेतिवा मा वा ऽहृ ददाम्यन्य पूरुषं । मन्दस्मित कुरुष्वेह वृन्दावनपतेर्वच.
॥ 14 ॥ दरिद्रैरपि दास्यामि धनाढचैः किं वदे तव । दास्यामीति सुदामाग्र्च महासाय महामते

।। 15 ।। त्वमपीह धनाढ्योऽसि दृढ बुद्धि सदा कुरु। मृडोऽपि ते मनस्तत्व प्रेरयिष्यति गाढशः ।। 16 ।।

**6. विप्र प्रकरणं श्लोक ( 17-21 )**

हे विप्र मत्प्रसादेन त्वत्पितृणा त्रिविष्टपम् । त्रिमार्गगावगाहातिपवित्राङ्गयुजामभूत् ।। 17 ।। तथाहि लोके मर्त्यानां कुले जातस्य कस्यचित् । तत्व सप्रश्नकस्यर्षे प्रसादे सति तत्कुलम् ।। 18 ।। सर्व त्रिविष्टपंचाप नष्टपाप त्रिसप्तकै । धिक्कृत्य नारकं कष्ट शिष्टानुग्रहृत कृतिन् ।। 19 ।। तद्वन्महानुभावस्य ममानुग्रहतस्त्वयि । विद्वस्त्वत्कुलजाता ये योग्या यान्ति त्रिविष्टपम् ।। 20 ।। अल मधुकरान्न ते छल माकुरु दारवत् । कुलकृत पवित्र ते तिलमात्र न दुष्कृतम् ।। 21 ।।

**7 हयग्रीव कर्मन्दि प्रकरणं श्लोक ( 22- 24 )**

भाषया भीषयस्येव दोषरुपिण एव तान् । काषाय दण्डवेषाय चास्तु स्वस्त्यविषह्य ते ।। 22 ।। दुर्वादीभमहासिह्म तव युक्त्याख्य सन्नखै. । तद्दुर्मत महाकुम्भदलन कुरु शीघ्रत' ।। 23 ।। वेदवेद्य द्युमणिना मणिमन्मत दुस्तम । निरस्त तूदितेनेह मत्पट्टोदय पर्वतात् ।। 24 ।।

**8 वेदवेद्य प्रकरणं ( 25-26 )**

हे वेदवेद्य दुस्तर्क तमसो ऽर्क प्रभायित । सत्तर्क कुमुदाना च कौमुदीश न ते सम. ।। 25 ।। पुरुषोत्तीह लोके च परुषोक्ति वदेद्यदि । सर्षपात्सम्मिता वापि कर्षणं यास्यते यमात् ।। 26 ।।

**9. वादिराज भट्ट प्रकरण ( 27 )**

वादिराज गुरुनामधराहो मत्कृति परमत निराकरोत् । त्व कुरुष्व रतिमत्र वेदराट् प्रोयते परम पूरुष एव ।। 27 ।।

**10 लक्ष्मीपति श्री प्रकरण श्लोक :– ( 28–39½ )**

हे शिष्ट कार्यत्रय मासनष्ट निविष्ट मेधैरिव भूतलेष्ट । स्पष्टं मुनीना परिहास गोष्ठ्या तिष्ठत्यजस्र सुत तद्यथेष्टम् ।। 28 ।। त्वत्सहस्र समायावत्तावन्ममतु ( सु ) हास्यता । नस्यात्स्वस्यायुष्य वृद्धिमपेक्ष्याह सदा वसे ।। 29 ।। तस्मात्कार्यत्रय कृत्वा कृतकृत्यो भव प्रिय । त्रिभि पुत्रस्य पुत्रत्व स्मृत्युक्तं सार्थकं कुरु ।। 30 ।। एतावानेव सत्पुत्र. पोतावश्यमिद कुरु । मातामित्रोश्च शुश्रुषा श्रोता श्रुत्वा दिव गत ।। 31 ।। कर्ता यातीति किमुत भर्तार च सती यथा । स्मृत्वा याति पर लोक कृत्वा सेवां कुरु प्रिय ।। 32 ।। तस्मान्मत्सेवया जीव सुत त्व शरदा शतम् । करदानादपि प्रीतिर्मम नैतादशी भवेत ।। 33 ।। तस्मात्त्व सर्व कार्यं च हित्वा कार्यत्रय कुरु ।

आर्यत्व मयि चेदस्ति तर्हीद कुरु शीघ्रत ॥ 34 ॥ इय मम कृतिश्चेति न] विप्रकृतिरित्यथ । विश्वासस्तवचेदस्ति तर्हीदं कुरु शीघ्रत ॥ 35 ॥ सुत सम्पूर्ण कामस्य हयग्रीवाज्ञया मम । काम: कुत्रापि नास्त्येव पूर्णकामस्य का स्पृहा ॥ 36 ॥ अथापि वक्ष्ये ते कामं मम काम्य मिदं त्रयम् । अध्यायात्मक सत्पद्यान्यस्मिन्नस्मत्कृति: परा ॥ 37 ॥ अन्नमन्त्रेष्ववैयर्थ्यमेतत्कार्यत्रय मम । एतत्त्रयं यदिकृत त्वया पुत्रेह कुत्रचित् ॥ 38 ॥ मम मित्र (पुत्र) स्त्वमेवेह सुत्राम्णश्च त्रिविक्रमः । यथा तथा सुत त्व मे वृथा मा कुरु मत्स्पृहाम् ॥ 39 ॥ व्यथा न मे कृतार्थस्याप्यथापि त्वद्धितायच ॥ 39½ ॥

## 11 हयग्रीव कर्मन्दि प्रकरण (40–73)

हे नन्दन कामधेनुवदेव त्व धनैरपि ॥ 40 ॥ वृन्दावनपतिध्यानाद्धन्य ब्राह्मणमावह । एव धृताया ध्रुवमात्मनः कृति सन्ध्याय स्वाध्याय तिथीस्त्वमुञ्चन् ॥ 41 ॥ अध्याय कृत्य कुर्वन्न(न)ध्यायकेषु । भृत्यैर्युक्तं कुरु कृष्णार्पण तत् ॥ 42 ॥ लोकेप्यवैदिक सभे यास्यत्याभरण धनम् । तत्सर्वमप्यह वक्ष्ये ऽप्ययमेव ममोद्यम ॥ 43 ॥ भ्रान्त मापृच्छ मा मायामयं जगदिद त्वसत् । इतिमाया वादिना तु मतमप्यनिश मृषा ॥ 44 ॥ लाभालाभौ हर्यधीनौ लोभालोभौ च देहिनाम् । सुखदु खे खगपतेरधीनौ श्वासदेहिन. ॥ 45 ॥ मानामानौ जनाना च मोहामोहौ महात्मन· । जयाजयौ श्रिय: कान्तान्मायामाये महाम (ते) ते. ॥ 46 ॥ इत्यादि द्वद्व जातानि मध्वसिद्धान्त वेदिनः । तस्मान्मापृच्छ मा मातापितरौ के तु मानव ॥ 47 ॥ पृच्छ सच्छास्त्र तत्वानि मयोक्तानि नवै मृषा । त्वया पृष्टेन वक्ष्यामि हृष्टोहं सतत प्रिय ॥ 48 ॥ स्पष्ट ते स्वेच्छया वक्ष्ये कष्ट ते ऽद्य किमागतम् । लोकवार्ता न मा पृच्छ तोकबुद्धिमिमा त्यज ॥ 49 ॥ काकवल्लघुतां यासि नाकेशसुतवत्प्रिय । अतस्त्वप उपस्पृश्य कुपथस्थित पापिनाम् ॥ 50 ॥ प्रसङ्गात् सुप्रसङ्गांस्तु प्रवक्ष्ये विप्रवर्य ते । विप्रान्त स्थितसन्तापस्तत्र न प्रज्वरांजि (दि) त ॥ 51 ॥ मत्प्रतापश्च तेजो रूपस्य त्वयि प्रकाशनात् । ( वृ पाठ ) ( मत्प्रतापाच्च तेजो रूपस्य त्वयि (प्र) काशनात् ) ॥ इति स्वा पाठः ॥ ( मत्प्रसादश्च ते ते जो रुपस्य त्वयि प्रकाशनात् । इति प्रि पाठ ) ॥ 51½ ॥ इत पर तु किवक्ष्ये वक्ष्ये परम पूरुषम् ॥ 52 ॥ शक्ष्येच वैष्णव द्रोहं न शक्ष्ये चान्यत कृतम् ।

हरिर्वेत्ति गुरुर्वेत्ति हरोवेत्ति गिरे सुता ॥ 53 ॥ धरावेत्त्यमराः सर्वे नरोवेत्ति नवाऽधुना । मनुष्यः पुष्य नक्षत्रे जात. कश्चन तुष्यति ॥ 54 ॥ इषुयोगे प्रेष्यभाव स करिष्यति मे सदा । हरिःसर्वोत्तमो नित्य गुरुद्वारा प्रसादकृत् ॥ 55 ॥ शिरसा धार्यते ऽस्याज्ञा विरिञ्चहरपूर्वकैः । करोति सृष्टि खलुलीलयैव हरत्यजस्र सलिले स शेते ॥ 56 ॥ धरत्यमोव खलु पालयस्तत्सरत्यजस्र खलु भक्तपालः ॥ 57 ॥ ब्रह्मन् ब्रह्माणि संतिष्ठन् सृष्टि चास्य करोत्यहो । दध्रे सरुद्रदेहस्थः कोपं तापहराय च ॥ 58 ॥ जडाज्जडमिद चक्रे दृढाद्दृढमसौ हरि । निबिडान्निबिडं भस्म बडवाद्व-ऽवाग्निना ॥ 59 ॥ विष्णुर्जिष्णु. स्वयं चास्य करोति जगता स्थितिम् । पूष्णोन्तस्थ स्वयं कृष्णः स्वतेजोभि. प्रकाशक ॥ 60 ॥ एव मोक्षं स्वपक्षस्य मुमुक्षो कुक्षिगस्यच । सपक्षि-वाहन कतु दक्षस्त्र्यक्षोऽपि न क्षम. ॥ 61 ॥ तत्पाद क्षालयित्वादौ स्पदं प्राप्तवान्विधिः । तत्तीर्थ शिरसा धृत्वा शूली कैलासमापच ॥ 62 ॥ शेषस्तच्छयन भूत्वा ह्यशेषां वहते भुवम् । स्वशेष पदवी याति स रोषं च जहाविह ॥ 63 ॥ वाहनो वैनतेयोऽभूत्तेन पुण्येन मानव । दानवान्तक नेत्राग्रे सर्वत्र वसतेऽनिशम् ॥ 64 ॥ कृष्ण कण्ठमणि कृत्वा ब्रह्माणं चगुणार्णव । तत्पद पारमेष्ठ्यं च प्रददौ प्रभुरव्ययः ॥ 65 ॥ एव देवाधिदेवश्च देवानां स्वस्य सेवया । ददाति पदवी योग्यां माधवः सदयानिधि. ॥ 66 ॥ ममापि पादसेवया ददाति योग्यवैभवम् । रमापतिः श्रियान्वितो दयान्वित. पदे पदे ॥ 67 ॥ क्रियापद प्रयोगेपि न धातुना विरोधिता । दैवे च छान्दसे वाक्ये न दोषायेति सन्मतम् ॥ 68 ॥ तन्मतं मन्मत चैकं विचिन्म तव सन्मतिम् । चिन्मात्रं तन्मते ब्रह्मास्मन्मते तदनन्तकम् ॥ 69 ॥ मतद्वये कथं भाति तव तत्व सुताहितम् । हित वा वद तत्वेन हृदि गुहितमेव ते ॥ 70 ॥ ब्रूमो वय तु भद्रं ते शृणु पुत्रान्य दुर्मतम् । व्यर्थं गतं बृहद्वीजबलीवर्दव-देव तत् ॥ 71 ॥ अतो मया कृतो योगो रुढिर्वा रूढमत्पद (रुढिमत्पदे) । विद्वद्रूढयात्मके यद्वत्स महारुढमार्यज ॥ 72 ॥ तस्मात्कवे प्रयोगे मे त्वप्रयोग इति प्रिय । मा प्रतीक्षा प्रभुत्वेन प्रकुरु प्रार्थये हरिम् ॥ 73 ॥

**12 विप्र प्रकरण ( 74–75 )**

ब्रूमो वयंतु भद्र ते शृणु पुत्रान्य दुर्मतम् । व्यर्थ गतं बृहद्वीज बलीवर्दवदेवतत् ॥ 74 ॥

इत्येकं श्लोक मुख्य मे त्यक्तवानसि विप्रक । आकरस्थं लेखनं च कारय प्राङ्मयेरितम् ॥ 75 ॥

**13. लक्ष्मी पति प्र – ( 76-85 )**

बाणिबालीयरामश्च ( वालावलीयो रामश्च ) ममलीलास्पदे द्विजे । कालाकाला (ल) गता ज्ञात्वा गाली ता दाम्बलाधमात् ॥ 76 ॥ निवारयामास तदा प्रतिगाली प्रदानत । स वर वरयामास मत्प्रसादेन पालितम् ॥ 77 ॥ द्विजगालीत्याजनेन भजतो भुजगेश्वरम् । सुजनस्यात्मजस्येह सौजन्य जनयत्यहो ॥ 78 ॥ वादिराजाख्यभट्टाद्या ( द्या ) मत्कृते लेखनादपि । मन्नन्दनाग्रे वक्तृत्वादच्युतस्यार्कमण्डले ॥ 79 ॥ ध्यानाद्यत्पुण्यमाप्नोषि तद्द्वय न त्यज द्विज । पश्यामि त्वयि विश्वास सस्थिति च सुते यथा ॥ 80 ॥ अन्यथा त्व गृहचापि कथ विप्रस्य दत्तवान् । त्वत्प्रीत्यापि प्रतापच तस्मान्मत्प्रीतिमान् भव ॥ 81 ॥ अहमध्याय ( त्म ) पर्यन्तं मध्य दिन रवेरह । गृध्रवच्चाग्रतस्तष्ये दुग्ध वारिधिग स्मरन् ॥ 82 ॥ उपलक्षणमेतच्चाप्युपलक्षित मेवच । अनेन चोपलक्ष्यस्व ( लक्षस्व ) हयुपलस्थलगा कृतिम् ॥ 83 ॥ यथा दधिच काकेभ्यो रक्ष्यतामिति वाक्यत । दध्युपघातका ग्राह्या ह्याखुभुगा (ग्व्या) दय स्तथा ॥ 84 ॥ तस्मान्मत्तपसावापि स्वस्य विश्वासतोऽपिवा । भजिष्यति सुषेणाग्र्य मत्कार्य शेषित त्रयम् ॥ 85 ॥ ॐ एतत्सर्व स्वाप्नपद्येन गर्वं हित्वा सर्वे विप्रवर्यास्यजेन । श्रुत्वा चोर्व्यां शर्व गुर्वादि देवान् । दृष्टवोर्वंशी त्यान्तु मा मानवेन्द्रा. ॥ 86 ॥ इद वृन्दावनाख्यान ये पठन्ति मनीषिण । मुकुन्दावनमेवास्तु तेषा कन्दाशनाज्ञया ॥ 87 ॥ इदमर्पित मेवास्तु हयशीर्षस्य पार्षदात् । सम सहस्रशीर्षस्य सूक्तस्य पुरुषात्कृतम् ॥ 88 ॥ यच्छृण्वता भक्तिरुदार सद्गुणे हरौ हरेर्लोकगते तथा मयि । भवत्यहो सर्व शुभाप्ति सन्मती ददात्यजस्र सुत सत्यमेव तत् ॥ 89 ॥ ॐ इति श्रीमत्कविकुल तिलक वागीशतीर्थं करकमल सञ्जात श्रीमद्वादिराज पूज्य चरणोदय ब्राह्मण स्वाप्न वृन्दावनाख्याने निदर्शन पर्वणि द्वितीय प्राणावधौ (चरम प्राणवधौ) पडचमाध्यायात्मक द्वाविंशति तमो अध्याय सम्पूर्ण । ॐ श्री श्री हयवदनाय नम. । समाप्रोऽय ग्रन्थ श्रीकृष्णार्पणमस्तु ॥ ॐ तत्सत् ॥

Swastik Press, Belgaum

( Additional Errata )

| पृष्ठ | अध्याय–श्लोक | अशुद्ध | शुद्ध |
|---|---|---|---|
| 59 | 10-140 | प्रेषा | प्रेष |
| 83 | 14-51 | चैदीं | चैर्दीं |
| 91 | 15-77 | स्वस्था | स्वस्या |
| 108 | 18-32 | त्वय् | तम् |
| 122 | 20-56 | कथ्यत | कथ्यते |
| 122 | 20-67 | मनि: | मुनि: |
| 132 | 22-14 | तर्वंच: | तेर्वंच: |
| 134 | 22-70 | गुहित | गूहित |

